ऋतुरस्म्यार्तवोऽस्म्याकाशाद् योनेः सम्भूतो भार्यायै रेतः संवत्सरस्य तेजो भूतस्य भूतस्यात्मा भूतस्य भूतस्य त्वमात्मासि यस्त्वमसि सोऽहमस्मि त-

---

वक्तव्यं प्रत्युत्तरमाह, ऋतुरस्मि वसन्ताद्यृतुस्वरूपो भवामि। कालात्मकत्वे उपपत्तिमाह, आर्तवोऽस्मि ऋतुसम्बन्धी भवामि कालात्मकेन मया सम्बन्धात्। मम कालात्मनस्त्वया तादृशेनाभेदप्राप्तिर्यतस्ततः कालः कालसम्बन्धी च भवामीत्यर्थः। तर्हि किं यथा चन्द्रमसः समागतः स ऋतुरार्तवश्च तथेत्याशङ्क्य नेत्याह, आकाशादव्याकृताद्योनेः उपादानकारणात् सम्भूत उत्पन्नः। †भार्यै भायाः स्वयं प्रकाशाद्ब्रह्मणः। अयमर्थः। न केवलं जडमुपादानकारणं किन्तु स्वयप्रकाशं ब्रह्म शबलमिति। ‡रेतः संवत्सरस्य तेजो भूतस्य भूतस्यात्मा भूतस्य भूतस्य। ननु कथं भाया आकाशाद्योनेः सम्भूतः कथमृतुरार्तवश्चेत्यत आह, भूतस्य अतीतस्य भूतस्य यथार्थस्य कारणरूपस्य भूतस्य चतुर्विधचेतनाचेतनात्मकस्य भूतस्य पञ्चमहाभूतात्मकस्य, नहि संवत्सरमन्तरेण चतुर्विधानि भूतानि पञ्च भूतानि चोत्पद्यन्ते, संवत्सरस्य वसन्ताद्यनेकर्तुस्वरूपस्य ‡रेतः संवत्सरप्रवर्तकमन्तर्बहिर्वर्तमानं तेजो दीप्तिस्वरूपं मद्बुद्धिप्रकाशकं आत्मा आत्मेति प्रत्ययव्यवहारयोग्यं संवत्सरस्य

---

* भार्यै भाया इति टी॰ B. C E.

† भार्यायै भार्याया इति D.

‡ एतत् संवत्सरस्येति B. C. E.

माह कोऽहमस्मीति सत्यमिति ब्रूयात् किं तद्यत्सत्य-
मिति यदन्यद्देवेभ्यश्च प्राणेभ्यश्च तत्सदथ यद्देवाश्च
प्राणाश्च तत्त्यं तदेतया वाचाभिव्याह्रियते सत्यमित्ये-

---

च तत्कार्यस्य च मयि स्वयप्रकाशस्वरूपेऽध्यस्तत्वात्। *यदा-
प्येतत्संवत्सरस्य अस्य सवत्सरस्य तेजोभूतस्य तेजःस्वरूपस्य
आदित्यादितेजसः प्रवर्त्यमानत्वात् भूतस्य व्यवहारयोग्यस्य
चेतनाचेतनात्मकप्रपञ्चस्य भूतस्य कारणस्य भूतस्य कार्यस्य
आत्मा अधिष्ठानभूत इति व्याख्येयं तदापि ऋतुत्वमार्तवत्वं
चाविरुद्धं कालस्यापि कारणस्य समानत्वात्। ननु कोऽयमा-
त्मेत्यत आह, त्वं पर्यङ्कस्थो ब्रह्मात्मासि आत्मशब्दप्रत्ययभाग्
भवसि। यद्येवं किं तवेत्यत आह, यः प्रसिद्धः पर्यङ्कस्थस्त्वमसि
ब्रह्मा मत्पुरतः स्थितोऽसि स त्वच्छब्दप्रत्ययालम्बन उक्तः अह-
मस्मि अस्मच्छब्दप्रत्ययालम्बनो भवामि इत्यनेन प्रकारेण
प्रतिब्रूयादित्यन्वयः। तमेवं वदन्तमुपासकमाह पर्यङ्कस्थो ब्रह्मा
ब्रूते कः प्रश्ने अहमस्मि, यस्त्वमात्मासीति भवतोक्तः स कोऽहं
ब्रह्मा भवामि। इत्यनेन प्रकारेण ब्रह्मणा पुनः पृष्ट उपासको
ब्रह्माणं प्रति सत्यं सत्यशब्दाभिधेयाधिष्ठानं इति ब्रूयात् अनेन
प्रकारेण वदेत्। एवमुक्ते पुनर्ब्रह्मा पृच्छति किं प्रश्ने तद्भवतोक्तं
यद्भवतः प्रसिद्धं सत्यं सत्यशब्दाभिधेयं। इत्यनेन प्रकारेण ब्रह्म-
णा पृष्टः पुनः प्रत्युत्तरं ब्रूयात् यत्प्रसिद्धमन्यद्देवेभ्यश्च प्राणे-

---

* पाठान्तरव्याख्यारम्भः।

तावदिदं सर्वमिदं सर्वमसीत्येवैनं तदाह *तदेतच्छ्लोकेनाभ्युक्तम् ॥ ६ ॥

यजूदरः सामशिरा असावृङ्मूर्तिरव्ययः स ब्रह्मेति विज्ञेय ऋषिर्ब्रह्ममयो महानिति तमाह केन

---

भ्यश्च इन्द्रियाधिष्ठातृभ्योऽग्न्यादिभ्यः इन्द्रियेभ्यः सप्राणेभ्यो व्यतिरिक्त। चकारौ वाय्वाकाशाभ्यामप्यन्यदित्येतदर्थौ। तत् उक्तमिन्द्रियप्राणव्यतिरिक्तं सत सच्छब्दालम्बनं। अथ पचान्तरे यत्प्रसिद्धं देवाश्च प्राणाश्च अग्न्यादय इन्द्रियाणि सप्राणकानि वाय्वाकाशौ च पूर्ववत् तदुक्तं देवादिकं त्यं त्यच्छब्दालम्बनं। तदुक्तं सचराचरं विश्वमेतया उक्तया सत्यरूपया वाचा वचनेनाभिव्याह्रियते सर्वत उच्यते। एतच्छब्दार्थमाह सत्यं सत्यशब्दरूप, इति सत्यानुकरणार्थः। एतावदियत्परिमाणमिदं प्रत्यचादिप्रमाणगम्यं सर्वं निखिलं जगत्। इदानीं श्रुतिराह इदं सर्वमसि इदं प्रत्यचादिप्रमाणगम्य सर्वं निखिलं भूतभौतिकात्मकं जगत् ब्रह्म त्वं भवसि, इत्येवैनं तदाह। तदा तस्मिन् ब्रह्मणो मञ्चकसमीपागमनकाले इत्येवोक्तेनैव प्रकारेण न त्वन्येन, एनं ब्रह्माणमाह उपासकः समागतो ब्रुते। †तदेतत् श्लोकेनाभ्युक्तम् ॥ ६ ॥

श्रुत्याप्येतद्ब्रह्मणः सर्वात्मत्वमुक्तमित्युपासकः श्रुतिमुदाहरति। तमुपासकं स्वात्मनः सर्वात्मत्वं ब्रुवाणं आह ब्रह्मा ब्रूते,

---

* तदेतदृक्श्लोकेनेति A

† तदेतदित्यादि उदाहरतीत्यन्तं B. C. E. पुस्तकेषु नास्ति।

मे पौंस्नानि नामान्याप्नोषीति प्राणेनेति ब्रूयात् केन नपुंसकानीति मनसेति केन स्त्रीनामानीति वाचेति केन गन्धानिति *प्राणेनेति केन रूपाणीति चक्षु-

केन करणभूतेन रूपेण वा, मे मम ब्रह्मणः सर्वात्मनः, पौंस्नानि पुल्लिङ्गसम्बन्धीनि नामानि नामधेयान्याप्नोषि प्राप्नोषि। इत्यनेन प्रकारेण ब्रह्मणा पृष्टे प्राणेन पञ्चवृत्त्यात्मकेन साधिदैविकेन करणेन रूपेण वा इति ब्रूयात्, अनेन प्रकारेण प्रत्युत्तरं वदेदुपासकः। पुनर्ब्रह्मा पृच्छति केन करणेन रूपेण वा स्त्रीनामानि स्त्रीलिङ्गनामधेयानि आप्नोषीत्यत्र वक्ष्यमाणेषु चानुवर्तते। इत्यनेन प्रकारेण पृष्टे वाचा प्राणनिष्पाद्यया वर्णाभिव्यक्तिहेतुभूतया इत्यनेन प्रकारेण ब्रूयादित्यनुवर्ततेऽत्र वक्ष्यमाणेषु च। पुनः पृच्छति केन करणेन रूपेण वा नपुंसकानि नपुंसकलिङ्गनामानि। इत्यनेन प्रकारेण एवं पृष्टे उत्तरमाह मनसा अन्तःकरणेन साधिदैविकेन इति अनेन प्रकारेण। पुनः पृच्छति केन करणेन गन्धान् पृथिव्येकगुणान् इति अनेन प्रकारेण। उत्तरमाह प्राणेन साधिदैविकेन इत्येव ब्रूयात् अनेन प्रकारेण वदेत् ब्रूयादित्यनुवर्तते, इत्येतदर्थं मध्येऽपि ग्रहणमन्ते च ग्रहीष्यति। एवकारः प्राणशब्दस्य द्विरभिधानं कथं करणीयमितिशङ्कानिवारणार्थः। पुनः पृच्छति केन करणेन रूपाणि तेजोऽवन्नगुणभूतानीत्यनेन प्रकारेण। चक्षुषा नेत्रेन साधिदैविकेन करणेनेति अनेन प्रकारेण। केन

* प्राणेनेत्येवेति टी०। घ्राणेनेति A.

## षेति केन शब्दानिति श्रोत्रेणेति केनान्नरसानिति जिह्वयेति केन कर्माणीति हस्ताभ्यामिति केन सुखदुःखे इति शरीरेणेति केनानन्दं रतिं प्रजाति-

---

स्पर्शान् त्वचेति प्रश्नोत्तरे वहिरेवावगन्तव्ये। पुनः पृच्छति केन करणेन शब्दान् ध्वनिवर्णपदवाक्यादिरूपान् इत्यनेन प्रकारेण। उत्तरमाह श्रोत्रेण शब्दोपलब्धिकरणेन साधिदैविकेन इत्यनेन प्रकारेण। पुनः पृच्छति केन करणेन अन्नरसान् अन्नस्य अदनीयस्य लेह्यपेयचोष्यचर्व्यभोज्यस्य रसान् कटुकाम्लतीक्ष्णलवणकषायमधुरान् रसान् इत्यनेन प्रकारेण। उत्तरमाह जिह्वया रसनेन्द्रियेण साधिदैविकेन इत्यनेन प्रकारेण। पृच्छति केन करणेन कर्माण्यादातव्यानि इत्यनेन प्रकारेण। उत्तरमाह हस्ताभ्यां हस्तद्वयरूपेण करणेन साधिदैविकेन इति अनेन प्रकारेण। पृच्छति केन करणेन सुखदुःखे अनुकूलप्रतिकूले वेदनीये इत्यनेन प्रकारेण। उत्तरमाह शरीरेण स्थूलसूक्ष्माख्येन पुण्यापुण्यसहकृताज्ञानहेतुना देहेन इत्यनेन प्रकारेण। पृच्छति केन करणेनानन्दं मैथुनावसानसमुत्थं सुखं, रतिं मैथुनरागजं सुखमामैथुनावसान योषिदालिङ्गनसुखमारभ्य, प्रजातीः प्रजाः कन्यासुतादिरूपाः इत्यनेन प्रकारेण। उत्तरमाह उपस्थेन उपस्थाख्येन करणेन स्त्रीपुंलिङ्गभेदेन भिन्नेन साधिदैविकेन इत्यनेन प्रकारेण। पृच्छति केन करणेन इत्याः गतीः इत्यनेन प्रकारेण। उत्तरमाह पादाभ्यां

मित्युपस्थेनेति केनेत्या इति पादाभ्यामिति केन धियो विज्ञातव्यं कामानिति प्रज्ञयैवेति ब्रूयात्तमाह आपो वै खलु मे लोकोऽयं तेऽसाविति सा या ब्रह्मणो

पादद्वयाख्येन करणेन साधिदैविकेनेत्यनेन प्रकारेण। पृच्छति केन करणेन *धियो बुद्धिवृत्तीः, विज्ञातव्यं धियां विषयज्ञानं, कामान् विविधेच्छापरपर्यायरूपानित्यनेन प्रकारेण। उत्तरमाह प्रज्ञया स्वयप्रकाशेनात्मबोधेन। यद्यपि सर्वमिदमनयैवाप्यते तथापि वागादिकं नामाद्यवाप्तौ साक्षात्करणमस्ति व्यवधायक न त्वेवं बुद्ध्यादौ किञ्चिदस्ति। यद्यपि सुखदुःखे अपि प्रज्ञैकवेद्ये तथापि मम पादे सुख शिरसि च दुःखमित्यादिप्रत्ययानुसारेण शरीरेणेत्युक्तं। यद्यपि नाममात्राप्तौ करणं वाक् प्राणस्य जीवनमन्तरेण न करणं, मनस्य सर्वोपलब्धिसाधारणकरणं तथापि स्त्रीपुंव्यक्तिवत् झटित्येव नपुंसकव्यक्तेर्बाह्यकरणैः प्रत्ययानुदयादस्ति नपुंसकाधिगमे मनसोऽभ्यधिको व्यापारो यतस्तत उक्तं मनसा नपुंसकानीति। प्राणस्य जीवनमन्तरेण अकरणस्यापि वाग्व्यापारसहकारित्वाद्वाकप्राणौ नामाप्तौ करणं भवतः। स्थिते च करणत्वे प्राणस्य पुरुषत्वाद्वाचः स्त्रीत्वाच्च वाक्प्राणयोर्विभागेन करणत्वमविरुद्धं। प्रतर्दनाग्निहोत्रे च वाक्प्राणयोर्नामाप्तौ करणत्वमर्थाद्गच्छति यावद्वा इत्यादिना (अ०२।ख०५)। इति ब्रूयाद्व्याख्यात। तं पादेन पर्यङ्कमारूढमुक्तोत्तरवादिनमाह पर्यङ्कस्थो ब्रह्मा ब्रूते।

* धियो बुद्धेरिति D.

जितिर्या व्यष्टिस्तां जितिं जयति तां *व्यष्टिं व्यश्नुते य एवं वेद य एवं वेद ॥ ७ ॥

इत्यारण्यके कौषीतकिब्राह्मणोपनिषदि प्रथमोऽध्यायः समाप्तः ॥ * ॥

---

ब्रह्मोक्तिमाह, आपः अप्शब्दाभिधेयान्यप्प्रधानानि पञ्चीकृतपञ्चमहाभूतानि सभौतिकानि, वै प्रसिद्धानि लोकवेदयोः, खलु निश्चितमनुपचरितमित्यर्थः, मे मम सर्वस्रष्टुर्हिरण्यगर्भस्य परब्रह्माभिन्नस्य, हि यस्मात् आपो मम तस्मादसौ अस्मयो मदीयोऽनेककोटियोजनविस्तीर्णः सर्वसुखभूमिः अयं प्रत्यक्षो मन्निवासः ते तव ममोपासकस्य मदभिन्नस्य लोको ब्रह्मलोकः, यावन्मदीयं तावत्त्वदीयमित्यर्थः, इत्यनेन प्रकारेण तमाहेत्यन्वयः। इदानीमुक्तोपासनस्य फलं सङ्क्षेपेण श्रुतिराह सा शास्त्रैकवेद्या आप इत्यादिना प्रकृता या प्रसिद्धा ब्रह्मविदां ब्रह्मणः पर्यङ्कस्थस्य हिरण्यगर्भस्य जितिर्जयरूपा सर्वातिशायित्वमित्यर्थः, या प्रसिद्धा व्यष्टिर्व्याप्तिः सर्वात्मकत्वमित्यर्थः, तामुक्तां जितिं जयरूपां जयति स्वाधीनां करोति तामुक्तां व्यष्टिं व्याप्तिं व्यश्नुते व्याप्नोति। व्याप्तारमाह यः प्रसिद्धः उपासकः एवं वेद उक्तेन प्रकारेण पर्यङ्कस्थं ब्रह्मोपास्ते, य एव वेद व्याख्यातं। वाक्याभ्यासोऽध्यायपरिसमाप्त्यर्थः ॥ ७ ॥

इति श्रीशङ्करानन्दभगवतः कृतौ कौषीतकिब्राह्मणोपनिषद्दीपिकायां प्रथमोऽध्यायः समाप्तः ॥ * ॥

---

* व्युष्टिमिति सर्वत्र D.

प्राणो ब्रह्मेति ह स्माह कौषीतकिस्तस्य ह वा एतस्य प्राणस्य ब्रह्मणो मनो दूतं चक्षुर्गोप्तृ श्रोत्रं संश्रावयितृ

प्रथमेऽध्याये पर्यङ्कविद्योक्ता तत्र चोक्तं स आगच्छत्यमितौजसं पर्यङ्कं स प्राण इत्यादिना प्राणस्य महाप्रभावत्व। निनेयश्च मन्दमध्यमोत्तमभेदेन त्रिविध', तत्र यः सकृदुक्त मोपपत्तिकं गृह्लाति स उत्तमः, यस्तु अनेकश उच्यमानमात्मानं गुरुं च सक्लेश्य गृह्लाति स मन्दः, यस्तु गुरूक्तं गृह्णन् स्वचित्त निरोद्धुमशक्तः स मध्यमः। स तु गुरुणोक्तस्य वान्यस्य वा उपदेशेन चित्तधैर्यं विविधैर्वैदिकैरुपायैर्नेतव्य इति न्यायमाश्रयन्ती भगवती श्रुतिः प्राणोपासनं चित्तस्थैर्यकरमनेकफलकल्पद्रुमरूपं तद्विदश्च वाह्याध्यात्मिककर्माणि विविधफलानि वक्तुं द्वितीयमध्यायमारभते। तत्र प्राणो ब्रह्मेत्युपासनं विवक्षु प्रसिद्धस्यर्षेर्मतमाह। प्राणो योऽयमास्येऽन्तः पञ्चवृत्तिः ब्रह्म सत्यज्ञानानन्दादिरूपं जगत्कारणं। इति ह स्माह, ह ऐतिह्ये स्म प्रसिद्धौ इत्याह एवमुक्तवान् कौषीतकिः। कु कुत्सितं निन्द्यं हेयमित्यर्थः, षीतं शीतं शीतल सांसारिकं सुखं यस्य स कुषीत एव कुषीतकः तस्यापत्यं कौषीतकिः। ननु ब्रह्म महाराजोपचारार्हं प्राणस्तु न तथेत्याशङ्क्य प्राणेऽपि महाराजचिह्नानि कानिचित्सम्पादयति, तस्य उक्तस्य, ह प्रसिद्धस्य, वै स्मर्यमाणस्य, एतस्य प्रत्यक्षस्यैव मुखविले वर्तमानस्य प्राणस्य पञ्चवृत्ते, ब्रह्मणः ब्रह्माभिन्नस्य

* कौशीतकिरिति D.

वाक् परिवेष्ट्री स यो ह वा एतस्य प्राणस्य ब्रह्मणो मनो दूतं वेद दूतवान भवति यश्चक्षुर्गोप्तृ गोप्तृमान भवति यः श्रोत्रं संश्रावयितृ संश्रावयितृमान् भवति यो वाचं परिवेष्ट्रीं परिवेष्ट्रीमान् भवति तस्मै वा एतस्मै प्राणाय ब्रह्मण एताः सर्वा देवता अयाचमानाय बलिं हरन्त्येवं

मनः सङ्कल्पविकल्पात्मकमन्तःकरण दूतं महाराजस्येव सन्धिविग्रहकारिभृत्यवद्वर्तमान। वाक् ताल्वादिस्थानस्थमिन्द्रियं परिवेष्ट्री परिवेषणस्य कर्त्री महाराजस्य विश्वासनीया योषिदिव। चक्षुः रूपोपलब्धिकरणमिन्द्रियं *गोप्तृ गोशब्दवाच्यानामिन्द्रियाणां रक्षकं महाराजस्येव गोर्भूमेः रक्षको मन्त्री। श्रोत्र शब्दोपलब्धिकरणं संश्रावयितृ सम्यक् श्रवणकारकं प्रतीहाररूप। तस्मै वा एतस्मै प्राणाय ब्रह्मणे कृत व्याख्यानं, हकारषष्ठ्योरभावो विशेषः। अत्र चतुर्थी तु बलिशब्दयोगार्था। एता उक्ता मनश्राद्याः सर्वा निखिला देवता देवताशब्दवाच्याः अयाचमानाय इदं मह्यमाहरन्त्विति प्रार्थनामकुर्वाणाय बलिं गर्भदासा इव राज्ञः करमपेक्षितमर्थजातमित्यर्थः, हरन्ति आहरन्ति अर्पयन्तीत्यर्थः। तथो एव अपि तथैव न त्वन्यथा, अस्मै प्राणोपासकाय सर्वाणि निखिलानि भूतानि स्थिरजङ्गमानि अयाचमानायैव इदं मे प्रयच्छन्तु इति प्रार्थनामकुर्वाणायैव न तु कुर्वाणायापि, बलिं हरन्ति व्याख्यातं। अस्मै इति य

* गोत्रमिति E.

**हैवास्मै* सर्वाणि भूतान्ययाचमानायैव बलिं हरन्ति य एवं वेद तस्योपनिषन्न याचेदिति तद्यथा ग्रामं भिक्षित्वाऽलब्ध्वोपविशेन्नाहमतो दत्तमश्नीयामिति त एवैनमुपमन्त्रयन्ते ये पुरस्तात् प्रत्याचक्षीरन्नेष धर्मो**

---

उक्तस्तमाह, यः प्रसिद्ध उपासकः एवं वेद उक्तेन प्रकारेण उपास्ते तस्य प्राणस्य ब्रह्मणो मनो दूतमित्यादिनोपासकस्य उपनिषद्रहस्यव्रतं न याचेत् प्राणात्ययेऽपि याञ्चां न कुर्यात्। इति उपनिषत्कथनसमाप्त्यर्थः। अयाञ्चायां दृष्टान्तमाह, तत् तत्रायाञ्चायां दृष्टान्तः, यथा दृष्टान्ते ग्रामं ब्राह्मणादिसमाकीर्णं देशविशेषं भिक्षित्वा भिक्षार्थं प्रतिगृहं गत्वा अलब्ध्वा एकमपि सिक्थमप्राप्य उपविशेत् ततो भिक्षाप्राप्तौ निराशः सन्नुपवेशनं कुर्यात् तदप्राप्तौ सञ्जातक्रोधः, एवं सङ्कल्पवान्। भिक्षुकस्य सङ्कल्पमाह, नाहमतो दत्तमश्नीयामनेन ग्रामेण मिलितेनामिलितेन वा दत्तं समर्पितं नाश्नीयामहं भोजनं न करवाणि अहं भिक्षुकः। इत्यनेन प्रकारेण सङ्कल्पे वर्तमानेऽस्मिन्, य एवादातृत्वेन प्रसिद्धास्त एव न त्वन्ये, एनं स्वस्मादप्राप्तभिक्षं स्वेभ्यो विगतस्पृहं ये पुरस्तात् पूर्वमस्मात् सङ्कल्पात् प्रत्याचक्षीरन् गच्छास्मत्तो न दास्याम इति निराकरणं कुर्युः, त एव प्रत्याख्यातार एव न त्वन्ये एनमयाचकं तन्मुखावलोकनपराङ्मुखमुपमन्त्रयन्ते उपमन्त्रणं

---

* तयो एवास्मा इति टी० ।

*ऽयाचतो †भवत्यन्नदास्त्वेवैनमुपमन्त्रयन्ते ददाम त इति ॥ १ ॥

प्राणो ब्रह्मेति ह स्माह पैङ्ग्यस्तस्य वा एतस्य प्राणस्य ब्रह्मणो वाक् परस्ताच्चक्षुरारुन्धते‡ चक्षुः परस्ताच्छ्रोत्रमारुन्धते श्रोत्रं परस्तान्मन आरुन्धते मनः

कुर्वन्ति ददाम दानं करवाम ते तुभ्यं पूर्वमस्मत्प्रार्थिकाय इदानीमपगताशाय इत्यनेन प्रकारेण। एष प्रत्यक्षो दीनवक्त्रत्वादिलक्षणो धर्मो गुणविशेषो याचतो याचकस्य भवति स्पष्टं। अन्यतस्त्वेव, तुशब्दः पक्षान्तरे, अन्यस्मान्निःस्पृहः प्रसन्नवदनः अन्य एव अयाच्ञायामेव न तु याच्ञायां यदि वर्तते तदा एवैनमुपमन्त्रयन्ते ददाम त इति व्याख्यातं। एवं याच्ञायाच्ञयोर्गुणदोषान् पर्यालोच्य न याचेदित्यर्थः ॥ १ ॥

यथा कौषीतकिस्तद्वत् पैङ्ग्यनामापि ऋषिरित्याह प्राणो ब्रह्मेति ह स्माह पैङ्ग्यस्तस्य ह वा एतस्य प्राणस्य ब्रह्मणः, पैङ्ग्यनामा पैङ्ग्यगोत्रो वा, व्याख्यातमन्यत्। ननु मनोदूतत्वादिलक्षणेन ब्रह्मत्वं प्राणस्य यद्यपि तथाप्यप्रत्यक्षादब्रह्मत्वमपीत्यत आह वाक् वागिन्द्रियात् परस्तात् परतः चक्षुश्चक्षुरिन्द्रियमारुन्धे समन्तादावृत्य तिष्ठति। वाचश्चक्षुरान्तर युक्तं दृष्टेः प्रायेण विसंवादाभावात्। चक्षुश्चक्षुरिन्द्रियात् पर-

* याचित इति B C E. याचत इति D टीका।

† भवत्यन्यतस्त्वेवेति टी०।

‡ आरुन्ध इति सर्वत्र टीका। आरुध्यत इति तु समीचीनः पाठः।

परस्तात् प्राण आरुन्धते तस्मै वा एतस्मै प्राणाय ब्रह्मण एताः सर्वा देवता अयाचमानाय बलिं हरन्त्येवं हैवास्मै सर्वाणि भूतान्ययाचमानायैव बलिं हरन्ति य एवं वेद तस्योपनिषन्न याचेदिति तद्यथा ग्रामं भिक्षित्वाऽलब्ध्वोपविशेन्नाहमतो दत्तमश्नीयामिति त एवैनमुपमन्त्रयन्ते ये पुरस्तात् प्रत्याचक्षीरन्नेष धर्मोऽयाचतो भवत्यन्नदास्त्वेवैनमुपमन्त्रयन्ते ददाम त इति ॥ २ ॥

---

स्ताच्छ्रोत्रमारुन्धे श्रोत्रं श्रवणेन्द्रिय, व्याख्यातमन्यत्। चक्षुषा शुक्तिकां रजतवत् पश्यन्ति न त्वेवं श्रोत्रमविद्यमानं शृणोति ततो युक्तं चक्षुष आन्तरत्वं श्रोत्रस्य। श्रोत्रं श्रोत्रेन्द्रियात् परस्तान्मनः सङ्कल्पविकल्पात्मकमन्तःकरणं, व्याख्यातमन्यत्। मनसः सावधानत्वे श्रोत्रेण श्रवणं, ततो युक्तं श्रोत्रादान्तरत्व मनसः। मनः मनसः परस्तात् परत आन्तरः प्राण. पञ्चवृत्तिः, प्राणबन्धन हि मन. प्रसिद्धं, आरुन्धत समन्तादावृत्य तिष्ठतीत्यवगम्यते पण्डितरूपैः। एवमान्तरत्वेन ब्रह्मत्वं युक्तं। तस्मै वा एतस्मै प्राणाय ब्रह्मण एताः सर्वा देवता अयाचमानाय बलिं हरन्ति, तथो एवास्मै सर्वाणि भूतान्ययाचमानायैव बलि हरन्ति य एवं वेद तस्योपनिषन्न याचेदिति तद्यथा ग्राम भिक्षित्वाऽलब्ध्वोपविशेन्नाहमतो दत्तमश्नीयामिति य एवैन पुरस्तात् प्रत्याचक्षीरंस्त एवैनमुपमन्त्रयन्ते ददाम त इत्येष धर्मो याचतो भवत्यन्यतस्त्वेवैनमुपमन्त्रयन्ते ददाम त इति व्याख्यातं ॥ २ ॥

अथात एकधनावरोधनं यदेकधनमभिध्यायात् पौर्णमास्यां वामावास्यायां वा शुद्धपक्षे वा पुण्ये नक्षत्र एतेषामेकस्मिन् पर्वण्यग्निमुपसमाधाय परिसमूह्य परिस्तीर्य पर्युक्ष्य दक्षिणं जान्वाच्य स्रुवेणाज्याहुती-

---

प्राणविदोऽर्थेच्छायां सत्यां कर्तव्यतामाह, अथ प्राण-ब्रह्मज्ञानानन्तरं अतो यस्मादिच्छा जाता अस्मात् कारणा-देकधनावरोधनं एकधन इति प्राणस्य नामधेयं जगत्यस्मि-न्नेक एव धनरूप एकधनः। प्राणांस्तु सतत रक्षेद्दारैरपि धनैरपीति न्यायेन प्राणस्य परमधनत्वात् तस्यावरोधनमेकत्र स्थापनमेकधनावरोधनं, अयमर्थ.। सत्यामर्थेच्छायामर्थाप्राप्तौ व्याक्षिप्तचेतसो न प्राणब्रह्मचिन्तनं, वक्ष्यमाणेनोपायेनार्थप्राप्तौ प्रसन्नचेतसः प्राणचिन्तनस्य सम्भवादिदमेकधनावरोधनं स्यात्। यद् यद्येकधनं प्राणमभिध्यायात् सर्वतो ध्यानं कुर्यादर्थेप्सुः तदार्थावाप्त्या इदं कुर्यादिति शेषः। अथवा एकमनन्यलभ्यं धनं तस्यावरोधनं प्राप्त्युपायः तद्गुणोचितं। एवमपि यद्येकधनमभि-ध्यायात् प्राणोपासकः तदा पौर्णमास्यां वामावास्यायां वा, वाशब्द इच्छाविकल्पार्थः स्पष्टमन्यत्। शुद्धपक्षे वा शुक्लपक्षे वाशब्दः कृष्णपक्षविकल्पार्थः, पुण्ये धन्ये, आत्मनोऽनुकूले इत्यर्थः, नक्षत्रेऽश्विन्यादौ शास्त्रविहिते। अग्निमुपसमाधाय अग्निं श्रौतं स्मार्तं वा स्वशाखोक्तक्रमेण कुण्डस्थण्डिलादौ प्रक्षिप्य परिसमूह्य समन्तात् तृणादिकमपनीय, परिस्तीर्य

जुहोति वाङ्नाम देवतावरोधनी सा मेऽमुष्मादिदम-वरुन्ध्यात्तस्यै स्वाहा प्राणो नाम देवतावरोधनी सा मे ऽमुष्मादिदमवरुन्ध्यात्तस्यै स्वाहा चक्षुर्नाम देवताव-रोधनी सा मेऽमुष्मादिदमवरुन्ध्यात्तस्यै स्वाहा श्रोत्रं नाम देवतावरोधनी सा मेऽमुष्मादिदमवरुन्ध्यात्तस्यै

---

समन्ताद्दर्भानवकीर्य, पर्युक्ष्य मन्त्रपूतेन वारिणा समन्तात् परिषिच्य, उत्पूयाज्यं स्वगृह्योक्तप्रकारेणोत्पवनसंस्कारेण सं-स्कृत्य, दक्षिणं जान्वाच्य दक्षिणं जान्वधो निपात्य, स्रुवेण वा चमसेन वा कंसेन वा, स्रुवचमसौ प्रसिद्धौ याज्ञिकानां, कंसं कांस्यद्रव्यादिकं तेन करणेन, वाचयं तु प्राप्तोक्तयोरनियत्यर्थं। एता वक्ष्यमाणाः आज्याहुतीराज्यभागविशेषान् जुहोति जुहुयात्। होममन्त्रानाह वाङ्नाम देवता वागभिधाना देव-ताऽवरोधनी उपासकाभीष्टार्थसम्पादिका सा उक्ता देवता मे मम प्राणोपासकस्य अर्थेच्छोरमुष्मात् मदभीष्टार्थस्वा-मिनः सकाशादिदं मदभीष्टमर्थजातमवरुन्ध्यात्* अवरो-धनं कुरुतां सम्पादयत्वित्यर्थः। तस्यै उक्तनाम्न्यै देवतायै स्वाहा होमाहुतिमेतदर्थप्रधानां स्वीकरोतु स्वाहुतं स्वीक-रोतु। प्राणो नाम देवतावरोधनी सा मेऽमुष्मादिदमवरुन्ध्या-त्तस्यै स्वाहा। चक्षुर्नाम देवतावरोधनी सा मेऽमुष्मादिदमव-रुन्ध्यात्तस्यै स्वाहा। श्रोत्रं नाम देवतावरोधनी सा मेऽमुष्मा-

---

* अवरुंद्धामिति B C E.

स्वाहा मनो नाम देवतावरोधनी सा मेऽमुष्मादिदम-वरुन्ध्यात्तस्यै स्वाहा प्रज्ञा नाम देवतावरोधनी सा मेऽमुष्मादिदमवरुन्ध्यात्तस्यै स्वाहेत्यथ धूमगन्धं प्रजिघ्रायाज्यलेपेनाङ्गान्यनुविमृज्य वाचंयमोऽभिप्रव्रज्यार्थं ब्रूयाद्दूतं वा प्रहिणुयाल्लभते हैव ॥ ३ ॥

---

दिदमवरुन्ध्यात्तस्यै स्वाहा। मनो नाम देवतावरोधनी सा मेऽमुष्मादिदमवरुन्ध्यात्तस्यै स्वाहा। प्रज्ञा नाम देवतावरोधनी सा मेऽमुष्मादिदमवरुन्ध्यात्तस्यै स्वाहा। प्राणो नाम प्राणाभिधानात् घ्राणग्रहणञ्च तन्त्रेणावगन्तव्यं, तेन घ्राणाभिधानेति मन्त्रान्तरमनुक्तमपि सिद्धं भवति। श्रोत्रं नाम श्रोत्राभिधाना। प्राणचक्षुःश्रोत्रमनःप्रज्ञामन्त्रा वाङ्मन्त्रवद्व्याख्येयाः। प्रज्ञया ब्रह्मत्वं चोक्तं। इति मन्त्रपरिसमाप्त्यर्थः। अथ होमानन्तरं धूमगन्धं होमधूमगन्धं प्रजिघ्राय प्रतिघ्राय आघ्राणं कृत्वा आज्यलेपेन होमावशिष्टाज्यलेपेन अङ्गान्यनुविमृज्य होमधूमघ्राणमनु सर्वगात्राण्युपलिप्य वाचंयमो मौनी अभिप्रव्रज्य होमदेशाद्यत्र क्वाप्यवस्थितमर्थस्वामिनं गत्वा अर्थं स्वाभीष्टमर्थं ब्रूयात् ब्रवीत इदं मे त्वत्तो भूयादिति वदेत्। अर्थस्वामिनो दूरदेशावस्थाने दूतं वा प्रहिणुयात् स्वभृत्यसुतादिकं दूतं प्रेरयेत्, भृत्याद्यभावे वाचं वेति वहिरेवावगन्तव्यं। लभते हैव प्रसिद्धमर्थं स्वाभीष्टं स्वात्मदूतवाक्यानामन्यतमेन गतेन प्राप्नोत्येव न तु न प्राप्नोति ॥ ३ ॥

**अथातो दैवः स्मरो यस्य प्रियो बुभूषेद्यस्यै *वा येषां वा यासां वैतेषामेवैकस्मिन् पर्वण्येतयैवावृतैता आज्याहुतीर्जुहोति वाचं ते मयि जुहोम्यसौ स्वाहा प्राणं ते मयि जुहोम्यसौ स्वाहा चक्षुस्ते मयि जुहो-**

---

एवमर्थोपायमुक्त्वा वश्योपायमाहोपासकस्य, अथ प्राणब्रह्मज्ञानानन्तरमतः यस्मादात्मनः प्रियस्येच्छा अस्मात्कारणात् दैवः दैवैर्वागादिभिः सम्पाद्यः स्मरोऽभिलाषः सम्पन्नो भवति यथा तथा कथ्यत इति शेषः। यस्य पुरुषस्य व्यक्तिविशेषस्यात्मन्यनुरागशून्यस्य प्रियो बुभूषेत् प्राणवत् प्रियो भवितुमिच्छेत्, यस्यै यस्याः स्त्रियाः वै प्रसिद्धाया राजादिपत्न्याः, येषां प्रत्यचाणां राजादीनां श्रीमतां सर्वस्नेहशून्यानां वै प्रसिद्धानां, यासां वान्यस्त्रीणां, तेषामेव वागाद्यधिष्ठातॄणामम्यादीनां न त्वन्येषां। अत्र वाशब्दाध्याहारेण योजनीयं, यस्यै वा प्रियो बुभूषेत्, येषां वा प्रियो बुभूषेत्, यासामेव वा प्रियो बुभूषेत्। एकस्मिन् पर्वणि दर्शपूर्णमासयोरन्यतरस्मिन् शुक्लपचात्मके वा पुण्ये नचत्रे पर्वदिवसे अग्निमुपसमाधाय व्याख्यातं। एतयैवावृता उक्तेन प्रकारेण परिसमूह्येत्यादिना एताः वक्ष्यमाणसङ्ख्याका आज्याहुतीर्जुहोति व्याख्यातं। वाचं वागिन्द्रियरूपां ते तव मयि प्रीतिं करिष्यतः मयि प्रीतिविषये तवाप्रीत्यौदासीन्ययोरन्यतरेन्धनसन्दीप्तेऽग्नौ जुहोमि प्रचिपामि, असौ

---

* वास्मामे वै इति टी० ।

म्यसौ स्वाहा श्रोत्रं ते मयि जुहोम्यसौ स्वाहा मनस्ते मयि जुहोम्यसौ स्वाहा प्रज्ञां ते मयि जुहोम्यसौ स्वाहेत्यथ धूमगन्धं प्रजिघ्रायाज्यलेपेनाङ्गान्यनुविमृज्य वाचंयमोऽभिप्रव्रज्य संस्पर्शं जिगमिषेदपि वा-

---

एतन्नामाहमय कामो वा मम सम्पन्नो भवतु, स्वाहा मदीया वाक् ममैतत्कामिन आज्याहुतेरनुज्ञां प्रयच्छतु। प्राणं ते मयि जुहोम्यसौ स्वाहा, चक्षुस्ते मयि जुहोम्यसौ स्वाहा, श्रोत्रं ते मयि जुहोम्यसौ स्वाहा, मनस्ते मयि जुहोम्यसौ स्वाहा, प्रज्ञां ते मयि जुहोम्यसौ स्वाहा, प्राणचक्षुःश्रोत्रमनः-प्रज्ञामन्त्रा वाङ्मन्त्रवद्व्याख्येयाः। इत्यथ धूमगन्धं प्रजिघ्रायाज्यलेपेनाङ्गान्यनुविमृज्य वाचयमोऽभिप्रव्रज्य व्याख्यातं। संस्पर्शं जिगमिषेत् स्वसाध्यस्य संस्पर्शं गन्तुमिच्छेत् गच्छेदित्यर्थः। अथ स्वसाध्यस्य महाविभूत्यादिमत्त्वेन स्पर्शः कर्तुमशक्यः। तदा पक्षान्तरमाह अपि वाताद्वा सम्भाषमाणस्तिष्ठेत् अपि वेति पक्षान्तरे साध्यस्य स्पर्शाभावे तेन सह वार्तां कुर्वन् तिष्ठेत्। सम्भाषणस्यापि कर्तुमशक्यत्वे वाशब्दः पक्षान्तरमाह वातात् तिष्ठेत स्वशरीरवातसस्पर्शो यथा भवति तथावस्थानं कुर्यादित्यर्थः। अथवा वातात्सम्भाषमाणस्तिष्ठेत् स्वकीयाः शब्दा यथा वायुनास्य कर्णरन्ध्रे स्थानं कुर्वन्ति तथा कुर्यादित्यर्थः। एवं कृते फलमाह प्रियो हैव भवति ह प्रसिद्धः सर्वस्य साध्यस्य प्रिय एव भवति न त्वप्रियः, न केवलं प्रियत्वमात्रं स्वसन्निधौ

**तादा तिष्ठेत् सम्भाषमाणः प्रियो हैव भवति स्मरन्ति हैवास्य ॥ ४ ॥**

**अथातः संयमनं प्रातर्दनमान्तरमग्निहोत्रमित्याचक्षते यावद्वै पुरुषो भाषते न तावत् प्राणितुं शक्नोति प्राणं तदा वाचि जुहोति यावद्वै पुरुषः प्राणिति**

---

किन्तु स्मरन्ति हैव अस्मिन् ग्रामान्तरादिगते ह प्रसिद्धा राजादयोऽस्य साध्याः, अस्य स्मरन्त्येव न तु विस्मरन्ति पित्रादेरिव पुत्रादयः। अयञ्च तान् सर्वान् हन्तुकामानिवासक्तिपूर्व्यः अस्मात् प्रक्षिपेत् यत्र क्वाप्यस्य विधेयाश्च भवन्तीत्यर्थः ॥ ४ ॥

इदानीं प्राणोपासकस्याग्निहोत्रफल विवक्षुराध्यात्मिकमग्निहोत्रमाह, अथ प्राणब्रह्मोपासनानन्तरं, अतो यस्मादग्निहोत्रफलस्येच्छावान् वाह्यमग्निहोत्रमनुष्ठातुमशक्तोऽनिच्छुर्वा अस्मात् कारणात् संयमनं सम्यग्यमनमहिंसादिकं यत्* तत् संयमनं, प्रातर्दनं प्रतर्दनेन दैवोदासिनानुष्ठितत्वेन तन्नामाङ्कितं प्रातर्दनं, आन्तरमग्निहोत्रमिति चाचक्षते आन्तरं वाह्यसाधननिरपेक्षमग्निहोत्रनामाङ्कितं कर्म इत्याचक्षते अनेन प्रकारेण कथयन्ति। चकारोऽग्निहोत्रान्तरत्वयोः प्रत्येकं मिलितयोरपि सञ्ज्ञात्वसमुच्चयार्थः। विद्वांसो यदान्तरमित्याचक्षते तदुक्तं वाक्प्राणयोरमितव्यापारकर्तृत्वमाह, यावद्यत्परिमाणं, वै प्रसिद्धं, पुरुषः पुरुषाकारशरीर-

---

* यत् सम्बन्धि तत् सायमनमिति B C E.

न तावद्भाषितुं शक्नोति वाचं तदा प्राणे जुहोत्येते अनन्ते अमृते आहुती जाग्रच्च स्वपंश्च सन्ततं जुहोत्यथ या अन्या आहुतयोऽन्तवत्यस्ताः कर्ममय्यो हि

---

धारी जन्तुः भाषते वाग्व्यापारं करोति न तावत् प्राणितुं शक्नोति वाग्व्यापारपरिमाणं प्राणव्यापारं कर्तुं न शक्नोति। अथवा वाक्प्राणयोः समकालं व्यापारं वारयति यावदित्यादिना। अस्मिन् पक्षे यावत्तावच्छब्दौ कालपरौ व्याख्येयौ। प्राणं वाग्व्यापारे सति स्वव्यापारशून्यं वाचो न्यूनव्यापारं दधिपयःसमानं, तदा तस्मिन् वाग्व्यापारकाले, वाचि व्यापारत्वेनाधिकायामग्निसमानायां जुहोति होमं करोति। वाक्समानधर्मत्वं प्राणस्य प्राणसमानधर्मत्वं वाचश्चाह यावद्वै पुरुषः प्राणिति न तावद्भाषितुं शक्नोति वाचं तदा प्राणे जुहोति स्पष्टं। सिद्धं हि वदन्न श्वसिति श्वसन्न ब्रूते चेति सर्वजनीनं। इदानीमग्निहोत्रमाह एते वाक्प्राणरूपे उक्ते, अनन्ते असङ्ख्यातव्यापाराधारे परस्पराग्नौ प्रविशन्त्यावप्यक्षीणे वा, अमृताहुती अन्तवद्धि म्रियते यतोऽन्तशून्ये ततोऽमृतरूपे आहुती अमृतत्वफलहेतुत्वाद्वा अमृताहुती। जाग्रच्च स्वपंश्च जाग्रति स्वप्ने च, चकारौ जाग्रत्स्वप्नयोरितरेतरयोगार्थौ। सन्ततं निरन्तरमागर्भनिर्गमनादोत्तरश्वासं अव्यवच्छिन्नं भोजनाच्छादनादिव्यवधानशून्यं, न हि वाक्श्वसनयोरन्यतरेण शून्यः कालो जीवतः, जुहोति होमं करोति होमबुद्धिं कुर्यादि-

भवन्ति *तद्ध स्मैतत् पूर्वे विद्वांसोऽग्निहोत्रं न जुहवाञ्चक्रुः ॥ ५ ॥

उक्थं ब्रह्मेति ह स्माह शुष्कभृङ्गारस्तदृगित्युपासीत

---

त्यर्थः। एतदग्निहोत्रं स्तोतुमन्य निन्दति। अथ पचान्तरे याः प्रसिद्धाः पयोदध्यादिद्रव्यसाध्या अन्या वाक्प्राणाहुतिभ्यां व्यतिरिक्ता आहुतयः आसेचनान्ता देवतामुद्दिश्य द्रव्यत्यागाः, अन्तवत्यः स्वरूपेण फलतोऽपि नाशवत्यः। तत्र हेतुमाह ताः वाक्प्राणाहुतिभ्यामन्यत्वेन प्रसिद्धाः, कर्ममय्यः शरीरव्यापारसाध्याः कृतकाः फलतः स्वरूपतश्च हि यस्मात् तस्मादन्तवत्यो भवन्ति स्पष्टं। अस्याग्निहोत्रस्य ज्ञाने सर्वसङ्गपरित्यागलक्षणसन्न्यासमाह एतद्ध वै पूर्वे विद्वांसः ह प्रसिद्धाः, वै स्मर्यमाणाः, पूर्वेऽतीताः, एतद्विद्वांसो वाचि अग्नौ भाषणव्यापारवत्यां प्राण आज्य निःश्वासोच्छ्वासव्यापारशून्यो हूयते, प्राणे चाग्नौ निःश्वासोच्छ्वासव्यापारवति वागाज्य भाषणव्यापारशून्या हूयत इत्येतत् ज्ञानवन्तः, अग्निहोत्रं न जुहवाञ्चक्रुः अग्निहोत्रहोमं न कृतवन्तः सर्वसङ्गपरित्यागलक्षण सन्न्यासं कृतवन्त इत्यर्थः ॥ ५ ॥

प्राणो वा उक्थमिति काण्वादिशाखासूक्थशब्दस्य प्राणे प्रसिद्धत्वात् तां प्रसिद्धिमनुरुन्धाना श्रुतिः प्राणमुक्थशब्देन निर्दिश्य तत्र ऋगादिदृष्टीर्विधातु, अस्य ब्रह्मत्वे कौषीतकिपैङ्ग्य-

---

* एतद्ध वै पूर्वे इति टी०।

सर्वाणि हास्मै भूतानि श्रैष्ठायाभ्यर्च्यन्ते तद्यजुरित्युपासीत सर्वाणि हास्मै भूतानि श्रैष्ठाय युज्यन्ते तत्सामेत्युपासीत सर्वाणि हास्मै भूतानि श्रैष्ठाय सन्नमन्ते तच्छ्रीरित्युपासीत तद्यश इत्युपासीत तत्तेज इत्युपा-

---

वत् शुष्कभृङ्गारसम्मतिमाह, उक्थं उक्थशब्दाभिधेयः प्राणः ब्रह्मेति ह स्माह व्याख्यातं शुष्कभृङ्गारः एतन्नामा मुनिः। तत् उक्थं ऋगिति ऋग्बुद्ध्या उपासीत। यावत् प्राण ऋगिति ऋगाकारो भवति तावद्विजातीयप्रत्ययशून्यं सजातीयप्रत्ययप्रवाहं कुर्वीत। प्राणे ऋग्बुद्धौ कृतायां फलमाह सर्वाणि निखिलानि ह प्रसिद्धानि अस्मै प्राणे उक्थे ऋग्बुद्धिकर्त्रे भूतानि स्थिरजङ्गमानि श्रैष्ठ्याय प्रशस्यतमत्वाय अभ्यर्च्यन्ते सर्वतः पूजां कुर्वन्ति। तद्यजुरित्युपासीत सर्वाणि हास्मै भूतानि श्रैष्ठ्याय युज्यन्ते। तत्सामेत्युपासीत सर्वाणि हास्मै भूतानि श्रैष्ठ्याय सन्नमन्ते। ऋग्बुद्ध्या समत्वं यजुःसामबुद्ध्योः। युज्यन्ते उद्युक्तानि भवन्ति, सन्नमन्ते सम्यक् प्रह्वीभूतानि भवन्ति, अन्यत् कृतव्याख्यानं। ऋग्यजुःसाम्नाञ्च पादबद्धाविवचितच्छन्दस्कप्रगीतमन्त्रात्मकानां प्रसिद्धत्वान्न ऋगादिपदस्य व्याख्या कृता। तच्छ्रीरित्युपासीत तद्यश इत्युपासीत तत्तेज इत्युपासीत। मनुष्यादेर्विभूतिः श्रीः, कीर्तिर्यशः, भास्वरं प्रकाशादिकारणं ज्योतिस्तेजः, व्याख्यातमन्यत्। श्रीयशस्तेजोबुद्धीनां सदृष्टान्तं फलमाह, तत्तच्च श्रीयशस्तेजोबुद्धिषु फले दृष्टान्तः,

सीत तद्यथैतच्छ्रीमत्तमं यशस्वितमं तेजस्वितममिति शस्त्रेषु भवत्येवं हैव स सर्वेषु भूतेषु श्रीमत्तमो यशस्वितमस्तेजस्वितमो भवति य एवं वेद तदेतदैष्टिकं

---

यथा दृष्टान्ते, एतदाकर्णपूर्णं गुणनिबद्धपृष्ठं पृथुतरसुवर्णपट्टिकावृतसर्वगात्रं पृथापुत्रसमधन्विकरस्थं वमदग्निमण्डलशरसमूहवृष्टिकरं धनुः शस्त्राणां खड्गपट्टिशतोमरशक्त्यृष्टिगदाभिन्दिपालचक्रत्तुरिकायमदंष्ट्रादीनां श्रीमत्तममतिशयेन विभूतिमत्, न ह्यन्यच्छस्त्रं धनुष्मतः सुभटस्य विभूतिं दधाति धन्वी चेत्तुरगारूढो जयत्येकोऽपि मेदिनीमिति प्रसिद्धेः। यशस्वितममतिशयेन यशःसम्पन्नं, विशिखा इव राजन्ते धनुषः सगुणादिव। निर्गताः शस्त्रसम्पाताः शूराणां लघुयोधिनामिति प्रसिद्धेः। तेजस्वितममतिशयेन तेजःसम्पन्नं यद्यपि लोहेषु शस्त्रेषु तेजस्वितमत्वं प्रसिद्धं तथापि सम्प्रहारावसरेऽन्यान्यपगतसौवर्णाद्यावरणानि भवन्ति, धनुस्तु तस्मिन्नप्यवसरे सुवर्णमणिरत्नादियुक्तमिति तेजस्वितमं, धन्विनस्य श्रीयशस्तेजांसि प्रसिद्धानि पार्थादेर्भवन्ति स्पष्ट। तथा एवं उ अपि धनुर्वदेव न त्वन्यथा एवं विद्वान् प्राणः श्रीयशस्तेजोबुद्धीनामालम्बनमिति जानन्, श्रीयशस्तेजोबुद्धिरुपासक इत्यर्थः। सर्वेषां भूतानां निखिलानां स्थिरजङ्गमानां मध्ये श्रीमत्तमो यशस्वितमस्तेजस्वितमो भवति स्पष्टं। इदानीं त्रयीविद्यानां कृतसंसारफलान्तर्वर्तिनामपि प्राणविज्ञानं मोक्षसाधनमित्याह

**कर्म्ममयमात्मानमध्वर्युः संस्करोति तस्मिन् यजुर्मयं प्र-
वयति यजुर्मय ऋङ्मयं होता ऋङ्मये साममयमुद्गाता**

---

तमुक्थशब्दाभिधेयं ऋगादिबुद्ध्यालम्बनं एतं मुखबिलान्तर्वर्त्त-
मानं प्रत्यक्षमिव ऐष्टकं इष्टकासम्बन्धिरूपमैष्टकं कर्म्ममयं
कर्म्मस्वरूपमात्मानमध्वर्युशब्दप्रत्ययालम्बनं अध्वर्युर्ऋत्विग्विशेषः
प्राणबुद्ध्या संस्करोति संस्कारं करोति योषितमिवाग्निबुद्ध्या।
अयमर्थः योऽयमिष्टकासु चितोऽग्निः कर्म्मसाधनः सोऽपि
प्राणात्मक एव प्राणस्य ऋगात्मकत्वात्, अयञ्च ऋगादि-
साध्यकर्म्मनिष्पादकः, अहञ्च तत ऋगात्मकः सर्वात्मा प्राणो
ऽहमस्मि अयमग्निश्च मदात्मकः इत्यात्मानं संस्करोतीति।
तस्मिन् प्राणबुद्ध्या संस्कृतेऽग्न्यभिन्ने आत्मनि यजुर्मयं यजुःसाध्यं
कर्म्मवितानं कुविन्द इव प्रवयति प्रकर्षेण कर्म्ममन्त्रतन्तुभि-
र्विस्तारयति। यजुर्मये यजुःसाध्ये कर्म्मविताने प्रवृत्ते सति
आधारभूते वा ऋङ्मयं ऋक्साध्यं कर्म्मवितानं प्रवयति होता
ऋत्विग्विशेषः। ऋङ्मये ऋक्साध्ये कर्म्मणि प्रवृत्ते सत्याधारभूते
वा साममयं सामसाध्यं कर्म्मवितानं प्रवयति उद्गाता ऋत्वि-
ग्विशेषः। स अध्वर्युः संस्कारहेतुः प्राणः, एष मुखबिलान्तः-
स्थः सर्वस्यै सर्वस्या निखिलायास्त्रयीविद्यायाः त्रयी ऋग्यजुः-
सामरूपा या सैव विद्या तस्या आत्मा आप्त्यादेः कर्त्ता शरीर-
स्येव जीवः। उक्तेन प्रकारेण उक्तमाख्यानं शृङ्ग्याहिकयाह
एष उ एव अपि मुखबिलान्तःस्थ एव न त्वन्यः, अस्यात्मा अस्या

**स एष *त्रय्यै विद्यायाः आत्मैष उ एवैतदिन्द्रस्यात्मा† भवति य एवं वेद ॥ ६ ॥**

**अथातः सर्वजितः कौषीतकेस्त्रीण्युपासनानि भवन्ति सर्वजिद्ध स्म कौषीतकिरुद्यन्तमादित्यमुपतिष्ठते**

---

आत्मा उक्तायास्त्रय्या आत्मा उक्तः। इदानीमेतज्ज्ञाने फलमाह एतदात्मा भवति प्राणरूपो भवति यः प्रसिद्धः कर्मणि ऋत्विग्यजमानादिः एवं प्राणबुद्ध्या सक्तते अध्वर्युरूपाग्नौ यजुर्मयमध्वर्युर्यजुर्मय ऋङ्मयं होता ऋङ्मये साममयमुद्गातेति वेद जानाति एतदात्मा भवतीत्यन्वयः॥ ६ ॥

प्राणो ब्रह्मेति कौषीतकिपैङ्ग्यशुष्कभृङ्गारमतैः सोपपत्तिकैरुक्तं, तत्र च ऋगादिदृष्टयः। स हि प्राणो बाह्य आध्यात्मिकश्च। बाह्य आधिदैविकः पुत्रादिरूपश्च आधिदैविकस्त्वादित्यः स चाग्नीषोमात्मकः। तत्राधिदैविक प्राणमुररीकृत्य फलविशेषसिद्ध्यर्थं प्रथमतः कानिचिदुपासनान्याह, अथ प्राणो ब्रह्मेति कथनानन्तरमतो यस्मात् फलान्तरस्यापीच्छोपासकस्य अस्मात् कारणात् सर्वजितः स्ववर्णाश्रमाचारैर्निखिलांस्त्रैवर्णिकान् जयतीति सर्वजित् तस्य कौषीतकेः कुषीतकस्यापत्यस्य त्रीणि त्रिसङ्ख्याकानि उपासनानि आधिदैविकस्य प्राणस्य ज्ञानानि भवन्ति वर्तन्ते। कौषीतकिदृष्टानि कथयिष्यामीत्यर्थः। यज्ञो-

---

* सर्वस्यै त्रय्यै इति टी०।

† एष उ एवास्यात्मा एतदात्मेति टी०।

यज्ञोपवीतं कृत्वोदकमानीय त्रिः प्रसिच्योदपात्रं वर्गो ऽसि पाप्मानं मे वृङ्‌ग्धीत्येतयैवावृता मध्ये सन्तमुद्वर्गो ऽसि पाप्मानं म उद्वृङ्‌ग्धीत्येतयैवावृतास्तं यन्तं संवर्गो ऽसि पाप्मानं मे संवृङ्‌ग्धीति तद्यदहोरात्राभ्यां पापम-

---

पवीतं कृत्वा यज्ञोपवीत विधाय, यद्यपि त्रैवर्णिकत्वेनैव यज्ञोपवीत प्राप्तं तथाप्यपसव्यादिविकारनिवारणार्थमिदं वचनं। अप आचम्य स्पृष्टं, अपामाचमनमपि यज्ञोपवीतवत्प्राप्तं तथापि त्वरादिनिमित्तनिवारणार्थमवगन्तव्यं तेनोभयत्र नियमः सिद्धो भवति। त्रिस्त्रिवारमुदपात्रं सौवर्णं राजतं ताम्रं वा चषकं प्रसिच्य शुद्धैः स्वच्छैर्जलैः प्रकर्षेण सेचनं विधाय उद्यन्त उदयं गच्छन्तमादित्यं अदितिपुत्रं भास्करं उपतिष्ठेत जानुभ्यामवनिं गत्वा ससम्भारनीरपूर्णचषकमुद्धृत्य समन्त्रमुपस्थानं कुर्यात्। मन्त्रमाह वर्गः सर्वमिदं जगत् आत्मबोधेन तृणवद्वृङ्क्ते परित्यजतीति वर्गः, असि भवसि, पाप्मानं कृतमागामि च पाप फलस्वरूपेणैव मे मम समन्त्रकेणार्घेणादित्यमुपस्थातुः वृङ्‌ग्धि वर्जय विनाशयेत्यर्थः, इति मन्त्रसमाप्तौ। एतयैव उक्तयैव यज्ञोपवीतमित्यादिना न त्वन्यथा आवृता प्रकारेण मध्ये सन्तं मध्याह्ने वर्तमानमादित्यमुपतिष्ठेत। उपस्थानमन्त्रमाह उद्वर्गोऽसि पाप्मानं म उद्वृङ्‌ग्धीति उदुत्कर्षार्थः अतिशयेन नाशयेत्यर्थ., व्याख्यातमन्यत्। एतयैवावृतास्तं यन्तं संवर्गोऽसि पाप्मानं मे संवृङ्‌ग्धीत्यस्तं यन्तमस्तं गच्छ-

करोत् सं तद्दङ्क्ते तथो एवैवं विद्वानेतयैवावृतादित्य-मुपतिष्ठते यदहाराचाभ्यां पापं करोति सं तद्दङ्क्ते ॥ ॥ ७ ॥

अथ मासि मास्यमावास्यायां वृत्तायां पश्चाचन्द्रम-सं दृश्यमानमुपतिष्ठेतैतयैवावृता हरिततृणे वा* प्रत्य-

---

न्तमुपतिष्ठेत समित्यादिमन्त्रेण, सं सम्यगर्थः। व्याख्यातमन्यत्। एवं त्रिवारमादित्यस्यार्घं कुर्वतः फलमाह यत्प्रसिद्धं दृष्टफल-महोराचाभ्यां अहनि रात्रौ च पापं करोति स्पष्टं, सं तद्दङ्क्ते तदशास्त्रीयं कर्म फलतः संवृङ्क्ते सम्यक परित्यजति पापफलं न प्राप्नोतीत्यर्थः। एकमिदमुपासन कर्मात्मकं ॥ ७ ॥

इदानीं द्वितीयमाह, अथ पूर्वस्मात् कर्मरूपादुपासनात् प्रकृतादर्थादग्निरूपादादित्यादनन्तरं कर्मरूपमुपासनान्तर-मादित्यस्य वाह्यप्राणस्य सुषुम्णानाडीरूपसोमात्मकं मासि मासि प्रतिमासमभ्यासबलादासंवत्सरमिति निश्चीयते, अमा-वास्यायां, अमाख्यरश्मौ सोमस्य निवासदिवसे पश्चाचन्द्रमस-मादित्यस्य पश्चिमभागे सुषुम्णाख्ये रश्मौ वर्तमानं सोमं दृश्य-मान शास्त्रतोऽवलोक्यमानमुपतिष्ठेत वर्गाद्वर्गसवर्गमन्त्रैः उदये मध्याह्ने अस्तमये च उपस्थान कुर्यात्, एतयैव यज्ञोपवीत-मित्यादिकयैव न त्वन्यया आवृता प्रकारेण। अमावास्यायां

---

* वास्थाने वाचमिति टी०।

स्यति यन्मे सुसीमं हृदयं दिवि चन्द्रमसि श्रितं मन्ये
ऽहं मां तद्विद्वांसं माहं पौत्र्यमघं रुदमिति न ह्यस्मात्

---

वृत्तायामिति पाठे द्वितीयायां चन्द्रोदये इति व्याख्यान। तत्र विशेषमाह हरिततृणाभ्यामशुष्काभ्यां दूर्वाङ्कुराभ्यां सह अर्घानन्तरं वाचं यत्त इत्यादिमन्त्ररूपां प्रत्यस्यति चन्द्रमसं प्रति अस्यति क्षिपति क्षिपेदित्यर्थः। वाचं मन्त्ररूपामाह यत् प्रसिद्धं योषितां स्तनमण्डलाधारं ते तव सोमात्मिकायाः प्रकृतेः सुसीमं शोभनमर्यादावत् आदित्यात्मकपुरुषस्यैकदेशरूपं हृदयं पद्माकारं पञ्चच्छिद्रमधोमुखं मांसखण्डं हृत् तदयति गच्छति यदानन्दात्मस्वरूपं तत् हृदयं अधिचन्द्रमसि श्रित चन्द्रमण्डलं स्तनाकारमधिकृत्य श्रितं वर्तमानं। तेन उक्तेन चन्द्रमण्डलसंस्थेन हृदयेन हेतुना अमृतत्वस्यानन्दरतिप्रजातिरूपस्य निरतिशयानन्दाभिव्यक्तिहेतुत्वेन च निरपेक्षस्य मोक्षस्य ईशाने हे नियन्त्रि माहं पौत्रमघं रुदं, अहं सोमात्मिका स्त्री अग्न्यात्मकः पुमानिति ज्ञातवान् अघ पापं निरुपरुद्दुःखकरं पुत्रसम्बन्धि पुत्रस्य प्राक्प्रध्वंसाभावाभ्यां शारीरव्याध्यादिना सन्तत्याद्यभावेन च कृत पौत्रं मा रुदं रोदनं मा कुर्यां तवेशानायाः प्रसादत इति शेषः। इति मन्त्रपरिसमाप्त्यर्थः। मन्त्रे पाठान्तरं यन्मे सुसीमं हृदयं दिवि चन्द्रमसि श्रितं मन्येऽहं मां तद्विद्वांसं माहं पुत्र्यमघं रुदमिति। तदाहं मां तस्य चन्द्रमसो विद्वांसं मन्य इत्यन्वयः।

पूर्वाः प्रजाः प्रैतीति नु जातपुत्रस्याथाजातपुत्रस्याप्यायस्व समेतु ते सं ते पयांसि समु यन्तु वाजा यमादित्या अंशुमाप्याययन्तीत्येतास्तिस्र ऋचो जपित्वा

---

न ह्यस्मात्पूर्वाः प्रजाः प्रैतीति। अस्मादुक्तप्रकारिणो ह प्रसिद्धात् उपासकात् पूर्वाः प्रथमत एतन्मरणमन्तरेणेत्यर्थः, प्रजाः पुत्रादिरूपा न प्रैति न प्रयन्ति न म्रियन्ते, इति नु एवं खलु अयं प्रकार इत्यर्थः, जातपुत्रस्य उत्पन्नसुतस्य न त्वनुत्पन्नसुतस्य। अथ जातपुत्रस्य उपासनकथनानन्तरं अजातपुत्रस्य अनुत्पन्नतनयस्योपासनप्रकारः कथ्यत इति शेषः। अजातपुत्रो जातपुत्रवत् सर्वतन्त्रं सम्पाद्य हरितहणे स्वीकृत्य यान्मन्त्रान् जपेत् तानाह, आप्यायस्व आप्यायनं गच्छ, समेतु सम्यक् गच्छतु, ते तव त्वयीत्यर्थः, अयमृक्पादः श्रुत्या प्रतीकत्वेन पठितः। एतावृक्पादौ परिशिष्टौ, विश्वतः सोम वृष्ण्यं भवा वाजस्य सङ्गथे। विश्वतः सर्वतोऽग्निरूपात्पुरुषगात्रात् हे सोम स्त्रीरूप वृष्ण्यं वृष्णोः पुरुषस्य हेतुभूतं शुक्रमाग्नेयं तेजः वाजस्यान्नस्य सङ्गथे भवा सङ्गते भव। अयमर्थः, पुत्रोत्पत्तिद्वारा पितॄणां पिण्डाद्यन्नदो भवेति। प्रजासम्पत्त्या त्वदीयं वृष्ण्यमाप्यायनं विश्वतः समेतु, मह्यं विश्वतो वाजस्य सङ्गमाय भवेति वार्थः। इदानीं मन्त्रान्तरप्रतीकभूतं पादान्तरमाह सं ते पयांसि समु यन्तु वाजा इति। ते तव सोमात्मिकायाः प्रकृतेः सं पयांसि सम्यक् क्षीराणि स्तनेन्दुमेघमण्डलस्थानि समु यन्तु वाजाः उ अपि वाजाः वाजिनोऽन्नोपजीविन-

मास्माकं प्राणेन प्रजया पशुभिराप्याययिष्ठाः योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मस्तस्य प्राणेन प्रजया पशु-

---

स्तनयान् संयन्तु सम्यग्गच्छन्तु। इदमपि पठितं श्रुत्या, शिष्टं पादत्रयं, संवृष्ण्यान्यभिमातिषाहः। आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्व। संवृष्ण्यानि सम्यक् पुरुषोपकारीणि, अभिमातिषाहः वैरिसाहः। पुत्रप्रवृद्ध्या चौराणि वैरिणामभिभवकारीणीत्यर्थः। हे सोम अमृताय अमृतत्वाय पुत्रोत्पत्त्यर्थमित्यर्थः, आप्यायमानः स्वेनाग्नेयेन च तेजसा आप्यायनं आह्लादनं गच्छन् दिवि स्वर्गे अवांस्युत्तमानि श्रवणयोग्यानि पयांसि प्रौढानि धिष्व धत्स्व। तृतीयमन्त्रस्य प्रतीकं पादमाह, यं तृतीयं प्रसिद्धं सर्वोत्पत्तिकारणमादित्या अग्न्यात्मकाः पुमांसः अंशुं सूर्यस्य सौषुम्णं किरणं सोमं स्त्रीरूपं आप्याययन्ति आह्लादयन्ति। मन्त्रस्यापठितं श्रुत्या पादत्रयं। यमक्षितमक्षितयः पिबन्ति। तेन नो राजा वरुणो बृहस्पतिराप्याययन्तु भुवनस्य गोपाः। यं सोमं राजानं प्रकृतिरूपं सूर्यं सुषुम्णानाडीरूपेण अक्षितमक्षीणं अक्षितयः क्षयशून्या आदित्यादयः पुरुषाः पतिपुत्रत्वादिना वर्तमानाः पिबन्ति लावण्यदुग्धादिरूपेण पान कुर्वन्ति, तेनांशुनाऽक्षितरूपेण सुषुम्णानाम्नेत्यर्थः। नोऽस्मान् सोमस्योपासकान् भुवनस्य गोपा लोकस्य रक्षकः प्रजापतिः बृहस्पतिर्वरुणो राजा चाप्याययन्तु आनन्द-

भिराप्याययस्वेत्यैन्द्रीमावृतमावर्त आदित्यस्यावृतम-न्वावर्त इति दक्षिणं बाहुमन्वावर्तते ॥ ८ ॥

---

यन्तु, इति मन्त्रत्रयप्रतीकपादत्रयपरिसमाप्त्यर्थः। एता उक्तपा-दत्रयाद्यास्तिस्रः त्रिसङ्ख्याका ऋचः पादबद्धान् मन्त्रान् जपित्वा वाचनिकं जपं विधाय अनेन वक्ष्यमाणेन मन्त्रेण सोमाभिमुखं दक्षिणं हस्तं निःसारयेदित्याह मास्माकं प्राणेन प्रजया पशुभि-राप्याययिष्ठाः अस्माक सोमोपासकानां मुखविलान्तःसञ्चारिणा वायुना प्राणेन पुत्रादिरूपया प्रजया गवादिरूपैः पशुभिः अ-स्मत्प्राणप्रजापश्वभावेनेत्यर्थः, माप्याययिष्ठाः अस्मच्छत्रूनानन्दं मा नयेथाः, किन्तु यः प्रसिद्धोऽस्मद्द्वेषी अस्मान्सोमोपासकान् द्वेष्टि द्वेषं करोति, यञ्च कृतापकारमकृतापकारं वा प्रसिद्धं प्रति-कूलं, चकारोऽस्मासु द्वेषिणः अस्य च समुच्चयार्थः, वयं सोमोपा-सका द्विष्मो द्वेषं कुर्मः, तस्य अस्माभिरज्ञातस्य च वैरिणः प्राणेन प्रजया पशुभिर्व्याख्यातं। आप्याययस्व अस्मानानन्दयेति। एव-मेतन्मन्त्रार्थरूपां दैवीं देवेन भवता सम्पाद्यामावृतं सञ्चरण-क्रियां आवर्त्ते समन्ताद्वर्तनं कुर्वे, आदित्यस्य अग्नीषोमात्मकस्य आवृतं सञ्चरणक्रियामन्वावर्त्ते भवतः सोमस्य प्रसादमनु आ-वर्तनं कुर्वे। इति मन्त्रपरिसमाप्त्यर्थः, एतैर्मन्त्रैरित्यर्थः। दक्षिणं बाहुं दक्षिणभुजं पूर्वं सोमाभिमुखं नीतं अन्वावर्तते मन्त्र-पाठमनु निःसारयति ॥ ८ ॥

अथ पौर्णमास्यां पुरस्ताच्चन्द्रमसं दृश्यमानमुपतिष्ठेतैतयैवावृता सोमो राजासि विचक्षणः पञ्चमुखोऽसि प्रजापतिर्ब्राह्मणस्त एकं मुखं तेन मुखेन राज्ञोऽत्सि तेन मुखेन मामन्नादं कुरु राजा त एकं मुखं तेन मुखेन विशोऽत्सि तेन मुखेन मामन्नादं कुरु श्येनस्त एकं मुखं तेन मुखेन पक्षिणोऽत्सि तेन मुखेन

---

उपासनद्वयमुक्त्वा तृतीयमुपासनं पुनः सोमस्याह, अथ अमावास्योपासनात्प्रकृतादुपासनान्तरं कथ्यत इति शेषः। पौर्णमास्यां पञ्चदश्यां षोडशकलचन्द्रसहितायां पुरस्ताच्चन्द्रमसं दृश्यमानं स्वस्याभिमुखे न प्रत्यहं षोडशकलं सोममुपतिष्ठेतैतयैवावृता पूर्ववद्व्याख्येयं। उपस्थानमन्त्रमाह सोम उमया विश्वप्रकृत्या सह वर्तमानः प्रियदर्शनः सोमो वा, राजा दीप्तिमानसि भवसि, विचक्षणः सर्वलौकिकवैदिककार्यकुशलः, पञ्चमुखः पञ्चवदनोऽसि भवसि, प्रजापतिः प्रजानां स्थिरजङ्गमानां पालयिता। पञ्चापि मुखानि विभागेन प्रार्थयते, ब्राह्मणो द्विजोत्तमः ते तव सोमस्य एकं मुखं एकं वदनं, तेन मुखेन उक्तेन वदनेन राज्ञः राजजातीयान् क्षत्रियानत्सि भक्षयसि, तेन मुखेन उक्तेन वदनेन मां सोमोपासकमन्नादं कुरु स्पष्टं। राजा त एकं मुखं, तेन मुखेन विशोऽत्सि तेन मुखेन मामन्नादं कुरु। श्येनस्त एकं मुखं, तेन मुखेन पक्षिणोऽत्सि तेन मुखेन

मामन्नादं कुर्वग्निष्ट एकं मुखं तेनेमं लोकमत्सि तेन मुखेन मामन्नादं कुरु त्वयि पञ्चमं मुखं तेन मुखेन सर्वाणि भूतान्यत्सि तेन मुखेन मामन्नादं कुरु मास्माकं प्राणेन प्रजया पशुभिरपक्षेष्ठा योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मस्तस्य प्राणेन प्रजया पशुभिरपक्षीय-

---

मामन्नादं कुरु। अग्निष्ट एक मुख तेन मुखेनेमं लोकमत्सि तेन मुखेन मामन्नादं कुरु। त्वयि पञ्चमं मुख तेन मुखेन सर्वाणि भूतान्यत्सि तेन मुखेन मामन्नादं कुरु। राजा मूर्द्धाभिषिक्तः चत्रियः। विशो वैश्यप्रधानाः प्रजाः। श्येनः पश्चिमासाशी क्रूरः पक्षी। पक्षिणः कपोतादीन् विहङ्गमान्। अग्निः प्रसिद्धो दाह-पाकप्रकाशनहेतुः कृशानुः। इमं लोकं प्रत्यक्षादिप्रमाणगम्यं अवाप्याकाशं विश्वं। त्वयि सोमे राजनि पञ्चमं ब्राह्मण-राजश्येनाग्न्यपेक्षया पञ्चसङ्ख्यापूरणं। सर्वाणि भूतानि निखिलानि स्थिरजङ्गमानि। शेषं ब्राह्मणपर्यायवद्राजश्येनाग्नि-सोमपर्यायेषु व्याख्येयं। मास्माकं प्राणेन प्रजया पशुभिर-वक्षेष्ठाः योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मस्तस्य प्राणेन प्रजया पशुभिरवक्षीयस्वेति दैवीमावृतमावर्त आदित्यस्यावृतमन्वा-वर्त इति दक्षिणं बाहुमन्वावर्तते, अवक्षेष्ठा अस्मद्बन्धूनामव-क्षयं मा कार्षीः, अवक्षीयस्व अस्मद्वैरिबन्धूनवक्षयं नय, अन्य त्पूर्ववद्व्याख्येयं। अथवाप्यायनावक्षयौ भाविशुक्लकृष्णपक्षापे-

स्वेति दैवीमावृतमावर्त आदित्यस्यावृतमन्वावर्त इति दक्षिणं बाहुमन्वावर्तते ॥ ९ ॥

अथ संवेश्यन् जायायै हृदयमभिमृशेत् यत्ते सुसीमे हृदये श्रितमन्तः प्रजापतौ तेनामृतत्वस्येशाने मा त्वं पुत्र्यमघं निगा इति न ह्यस्याः पूर्वाः प्रजाः प्रैतीति॥१०॥

---

क्षया चन्द्रनिष्ठौ व्याख्येयौ। तथा चैकेनैव पक्षेण स्वात्मनो वृद्धिर्वैरिणो नाशश्चेति फलप्राप्तिरर्थादुक्ता भवति ॥ ९ ॥

अथ एवं सोमप्रार्थनानन्तरं संवेश्यन भार्यया सह सम्यगानन्दरतिप्रजात्यर्थं वेश्यन् उपवेशनं करिष्यन् जायायै जायाया हृदयं स्तनमण्डलाधारदेशमभिमृशेद्वक्ष्यमाणेन मन्त्रेण सर्वतः स्पृशेत्। मन्त्रमाह यत्प्रसिद्धं शरीरान्तरकारणं सुखं ते तव सोमरूपायाः स्त्रियाः सुसीमे हे शोभनगात्रे हे सुसीमन्निति वा, अथवा सप्तम्यन्तमिदं हृदयविशेषणं शोभना सीमा पुरुषस्य केदाररूपा यस्य तत् सुसीमं, तस्मिन् हृदये हृदयपुण्डरीकाख्ये आनन्दात्मनिवासे श्रितं निहित चन्द्रमण्डल इवामृतं अन्तर्मध्ये प्रजापतौ प्रजापालके अथवा प्रजापतौ प्रजापतिना स्रष्टा मयेत्यर्थः। मन्येऽहं मां तद्विद्वांसं अहं सोमोपासकस्तव पतिस्तदुक्तं प्रजापतिना निहितं मां सोमोपासकं विद्वांसं समस्तशास्त्रार्थविदं मन्येऽवगच्छामि, तेन सत्येन माहं पौत्रमघं रुदमिति। तेनामृतत्वस्येशाने मा त्वं पुत्र्यमघं निगा इति पाठो वा। न ह्यस्मात्पूर्वाः प्रजाः प्रैतीति व्याख्यातं ॥ १० ॥

अथ प्रोष्यायन् पुत्रस्य मूर्धानमभिजिघ्रेत्* । अङ्गा-दङ्गात्सम्भवसि हृदयादधिजायसे । आत्मा वै पुत्र नामासि स जीव शरदः शतमिति नामास्य दधात्यश्मा भव परशुर्भव हिरण्यमस्तृतं भव तेजो† वै पुत्र नामासि स जीव शरदः शतमिति नामास्य गृह्णात्यथैनं परिगृ-

---

इदानीं मपुत्रस्य सामोपासकस्य पुनः कृत्यान्तरमाह, अथ सोमोपासनानन्तरं प्रोष्य ग्रामान्तरं देशान्तरं वा गत्वा आयन् आगच्छन् आगतः सन्नित्यर्थः, पुत्रस्य पितुर्दुःखनिवारकस्य वात्स्यस्य प्राणस्य मूर्धानं मस्तकमभिमृशेत् करेण संस्पृशेत् । सस्पर्श-मन्त्रमाह अङ्गादङ्गात् गात्रात् गात्रात् शिरःपाण्यादिभ्यः सर्वेभ्यो गात्रेभ्य इत्यर्थः सम्भवसि निर्गच्छसि हृदयादधिजायसे सर्वेभ्यो गात्रेभ्यो निर्गतो हृदयादधिक प्रकटीभवसि आत्मा मत्स्वरूपः, पुत्र हे पुत्र त्वं पुन्नाम्नो निरयात् मा मामावित्थ मम रक्षणं कृतवान्, स मम रक्षकः जीव प्राणान् धारय शरदः शतं शतं संवत्सरान् असौ एतन्नामा इत्यनेन मन्त्रेणास्य नाम गृह्णाति अस्य पुत्रस्य नामग्रहणं करोति पिता । नामग्रहणे पुनर्मन्त्रान्तरमाह, अश्मा भव पाषाणो भव । रोगैरनुपद्रुतः वज्रसारशरीरो भवेत्यर्थः, परशुर्भव कुठारवद्वैरिवृक्षच्छेदकरो भव हिरण्यमस्तृतं भव अस्तृतमास्तृतं सर्वतः परिस्तृतं कनकवत्सर्वप्रजाप्रियो भव, तेजो वै पुत्र नामासि वै प्रसिद्ध सर्व-

---

* अभिमृशेदिति टी० ।　　† वेदो वा इति A.

ह्णाति येन प्रजापतिः प्रजाः पर्यगृह्णात्तदरिष्ट्यै तेन त्वा परिगृह्णाम्यसावित्यथास्य दक्षिणे कर्णे जपत्यस्मै प्रयन्धि मघवन्नृजीषिन्नितीन्द्र श्रेष्ठानि द्रविणानि धेहीति सव्ये मा छेत्था मा व्यथिष्ठाः* शतं शरद आयुषो जीवस्व पुत्र ते नाम्ना मूर्धानमभिजिघ्रामीति त्रिरस्य

गात्रसारभूतं यत्तेजः समारवृक्षवीजं तन्नामा त्वं भवसि। हे पुत्र स जीव शरदः शतमसाविति नामास्य गृह्णाति व्याख्यातं। तृतीयनामग्रहणे तृतीयं मन्त्रमाह येन प्रसिद्धेन स्वयंप्रकाशेन तेजसा प्रजापतिः प्रजानां पालको धाता प्रजाः स्वसन्तानभूताः स्थिरजङ्गमाख्याः पर्यगृह्णात् सर्वतः स्वीकृतवान् अरिष्ट्यै प्रजानामविनाशनार्थं तेन प्रजापतिप्रजाग्रहणेन तेजसा त्वा त्वां पुत्रं परिगृह्णामि सर्वतः स्वीकरोमि। असाविति नामास्य गृह्णाति व्याख्यातं, अथास्य दक्षिणे कर्णे पिता जपति अस्मै प्रयन्धि मघवन्नृजीषिन्निति, इन्द्र श्रेष्ठानि द्रविणानि धेहीति पुत्रस्य सव्ये कर्णे पिता जपति। इदानीं मूर्ध्न आघ्राणे मन्त्रमाह मा छेत्था. मत्सन्ततेश्छेदं मा कार्षीः, मा व्यथिष्ठाः शरीरेन्द्रियमनोभिर्व्यथां मा गाः। शतं शरद आयुषो जीवस्व शरदः शतमायुषो जीव शतं संवत्सरान् जीवेत्यर्थः। पुत्र हे पुत्र ते नाम्ना तव पुत्रस्याभिधानेन देवदत्तादिलक्षणेन मूर्धानं मस्तकमवजिघ्रामि आघ्राण करोमि असावेतन्नामाहं तव पिता,

* मा भेत्था मा व्यतिष्ठा इति A.

मूर्धानमभिजिघ्रेत् गवां त्वा हिङ्कारेणाभिहिङ्करोमीति त्रिरस्य मूर्धानमभिहिङ्कुर्यात् ॥ ११ ॥

अथातो दैवः परिमर एतद्वै ब्रह्म दीप्यते यदग्निर्ज्वलत्यथैतन्म्रियते यन्न ज्वलति तस्यादित्यमेव तेजो

---

इत्यनेन मन्त्रेण त्रिः त्रिवारं मूर्धानमवजिघ्रेत् मूर्ध्न आघ्राणं कुर्यात्। इदानीं हिङ्कारमन्त्रमाह गवां कामधेन्वादीनां सवत्सानां घटोध्नीनां त्वा त्वां पुत्रं हिङ्कारेण वत्साकारणार्थं गोभिः क्रियमाणः स्वरो हिङ्कारः तेनाऽभिहिङ्करोमि सर्वतो हिङ्कारेणाकारयामि, इत्यनेन मन्त्रेण त्रिः त्रिवारं मूर्धानमभिहिङ्कुर्यात् सर्वतो मूर्ध्नि हिमिति शब्दं कुर्यात् ॥ ११ ॥

एवं कौषीतकेस्त्रीण्युपासनान्युक्त्वा प्रकृतं प्राणस्य ब्रह्मत्वं संवर्गविद्यारूपेणान्तर्हितं विवक्षुः फलान्तराय नामान्तरमाह, अथ प्राणस्य ब्रह्मत्वकथनानन्तर, अतः यस्मात् स्ववैरिणो मरणस्येच्छा अस्मात् कारणात्, दैवः देवानां वागादीनां सम्बन्धी दैवः, परिमरः प्राणं परितो म्रियन्ते अग्न्याद्या वागाद्याश्चेति प्राणो ब्रह्मरूपः परिमरः कथ्यत इति शेषः। एतत्प्रत्यक्षं वै प्रसिद्धं ब्रह्म प्राणोपाधिकं सत्यज्ञानादिरूपं दीप्यते प्रकाश्यते, यद्यदाऽग्निर्दाहपाकप्रकाशहेतु. कृशानुर्ज्वलति दीप्तिमान भवति, अथ तदा एतदुक्तं ब्रह्म म्रियते प्राणं मुञ्चति यन्न ज्वलति यदाग्निर्दीप्तिमान्न भवति, तस्य दीप्तिशून्यस्याग्नेः आदित्यमेव भास्करमेव न त्वन्यं तेजो गच्छति दीप्तिः प्राप्नोति,

गच्छति वायुं प्राण एतद्वै ब्रह्म दीप्यते यदादित्यो दृश्यतेऽथैतन्म्रियते यन्न दृश्यते तस्य चन्द्रमसमेव तेजो गच्छति वायुं प्राण एतद्वै ब्रह्म दीप्यते यच्चन्द्र-मा दृश्यतेऽथैतन्म्रियते यन्न दृश्यते तस्य विद्युतमेव तेजो गच्छति वायुं प्राण एतद्वै ब्रह्म दीप्यते यद्विद्युद्वि-द्योततेऽथैतन्म्रियते यन्न विद्योतते *तस्या दिश एव तेजो गच्छति वायुं प्राणस्ता वा एताः सर्वा देवता

---

वायुमाधिदैविकं प्राण प्राणः प्रकर्षेण चेष्टाहेतुर्वातो गच्छति। एतद्वै ब्रह्म दीप्यते यत् पूर्ववद्व्याख्येयं। आदित्यो दृश्यते भास्करो नयनपथमागच्छति अथैतन्म्रियते यत् पूर्ववद्व्याख्येयं, न दृश्यते नयनाभ्यां न निरीक्ष्यते, तस्मादृष्टस्यादित्यस्य चन्द्रमसमेव सोम-मेव न त्वन्य तेजो गच्छति वायुं प्राणः। एतद्वै ब्रह्म दीप्यते यच्च-न्द्रमाः दृश्यतेऽथैतन्म्रियते यन्न दृश्यते तस्य विद्युतमेव तेजो ग-च्छति वायुं प्राणः। एतद्वै ब्रह्म दीप्यते यच्चन्द्रमाः सोमः तस्य चन्द्रमसो विद्युतमेव सौदामिनीमेव न त्वन्यं। अन्यत् पूर्ववद्व्या-ख्येयं। विद्युत् सौदामिनी विद्योतते विद्योतनं कुरुते दृश्यते इत्यर्थः। अथैतन्म्रियते यन्न विद्योतते तस्य वायुमेव तेजो गच्छति वायुं प्राणः, न विद्योतते न दृश्यते, तस्य विद्युद्रूपस्य तेजःप्राणौ वायुमेवाधिगच्छतः। अन्यत् पूर्ववद्व्याख्येय। ता उक्ता वै प्रसिद्धा एता अग्न्यादित्यचन्द्रमोविद्युद्रूपाः सर्वा

---

* तस्य वायुमेव तेज इति टी०।

वायुमेव प्रविश्य वायौ *मृत्वा न मृच्छन्ते तस्मादेव पुनरुदीरत इत्यधिदैवतमथाध्यात्मं ॥ १२ ॥

एतद्वै ब्रह्म दीप्यते यद्वाचा वदत्यथैतन्म्रियते यन्न वदति तस्य चक्षुरेव तेजो गच्छति प्राणं प्राण एतद्वै ब्रह्म दीप्यते यच्चक्षुषा पश्यत्यथैतन्म्रियते यन्न पश्य-

निखिला देवताः देवताशब्दाभिधेयाः वायुमेव वात प्राणमेव न त्वन्यं प्रविश्य प्रवेशं कृत्वा, वायावाधिदैविके प्राणे मृता अस्तं गता न मृच्छन्ते न विनश्यन्ति वायुतादात्म्येन, तस्मादेव तु अपि तत एव वायोर्न त्वन्यस्मात् पुनरुदीरते भूय उदयमागच्छन्ति, इत्यनेन प्रकारेणाधिदैवत देवता अधिकृत्योक्तं अधिदैवतं॥१२॥

अथाधिदैवतकथनानन्तरं अध्यात्ममात्मानमधिकृत्योक्तम-ध्यात्मं। एतद्वै ब्रह्म दीप्यते यद्वाचा वदत्यथैतन्म्रियते यन्न वदति तस्य चक्षुरेव तेजो गच्छति प्राणं प्राण एतद्वै ब्रह्म दीप्यते यच्चक्षुषा पश्यत्यथैतन्म्रियते यन्न पश्यति तस्य श्रोत्र-मेव तेजो गच्छति प्राणं प्राण एतद्वै ब्रह्म दीप्यते यच्छ्रोत्रेण शृणोत्यथैतन्म्रियते यन्न शृणोति तस्य मन एव तेजो गच्छ-ति प्राणं प्राण एतद्वै ब्रह्म दीप्यते यन्मनसा ध्यायत्यथैतन्म्रि-यते यन्न ध्यायति तस्य प्राणमेव तेजो गच्छति प्राणं प्राणस्ता वा एताः सर्वा देवताः प्राणमेव प्रविश्य प्राणे मृता न मृच्छ-

* मृत्वान्नमृच्छन्त इति A मृतान्नमृच्छन्त इति D मृता न मृच्छन्त इति टी०। किन्तु मृता इति स्थाने स्वप्ता इति क्वचित् पाठान्तर । पश्चात् त्रयोदशतमे खण्डे मृत्वा न मृच्छन्त इति A D अतस्तदेवात्र मुद्राङ्कितं।

ति तस्य श्रोत्रमेव तेजो गच्छति प्राणं प्राण एतद्वै ब्रह्म दीप्यते यच्छ्रोत्रेण शृणोत्यथैतन्म्रियते यन्न शृणोति तस्य मन एव तेजो गच्छति प्राणं प्राण एतद्वै ब्रह्म दीप्यते यन्मनसा ध्यायत्यथैतन्म्रियते यन्न ध्यायति तस्य प्राणमेव तेजो गच्छति प्राणं प्राणस्ता वा एताः सर्वा देवताः प्राणमेव प्रविश्य प्राणे मृत्वा न

---

न्ते तस्मादेव पुनरुदीरते वाचा चक्षुषा श्रोत्रेण मनसा चेन्द्रियेण वदनमवलोकनं श्रवणं ध्यानञ्च यथाक्रमेण कुरुते चेद्दीपनं, न चेन्मरणं। अग्नेर्वागादित्यस्य चक्षुश्चन्द्रमसः श्रोत्रं विद्युतो मनो वायोः प्राण इत्यत्र विशेषः। अन्यत् पूर्ववद्व्याख्येयं। दैव-परिमरज्ञानस्य फलमाह, तत् तस्मिन् दैवे परिमरे ज्ञाते यदि पक्षान्तरे असम्भावितमिदं अथ कथञ्चिद्दैवाद् भवेत्, ह प्रसिद्धाः, वै स्मर्यमाणा एवं विद्वांसः उक्तेन प्रकारेण दैव-परिमरज्ञानवन्तः, उभौ द्वौ पर्वतौ गिरी अभिप्रवर्तेयातां अभिप्रवर्तयेरन् सर्वतः प्रवृत्तिं द्वन्द्वयुद्धैरिवोत्पतनाधोभूमि-प्रवेशादिकं कारयेयुः। तौ च किं पर्वतावल्पाविकदेशस्थौ, नेत्याह, *तुस्तूर्षमाणौ दक्षिणश्च उत्तरश्च आस्तरणं कुर्वाणौ दक्षिण एकस्मादृशस्थोत्तरः,चकारौ दक्षिणोत्तरयोस्तुस्तूर्षमाण-पदसम्बन्धार्थौ। अयमर्थः। उत्तरपूर्वादिदेशस्थ एकः अपरश्च भारतखण्डादिस्थः उभावपि भास्करगतिनिरोधकौ पृथिवीं

---

* तुतूर्षमानाविति पाठान्तरः।

मृच्छन्ते तस्मादेव पुनरुदीरते तद्यदि ह वा एवं विद्वां-समुभौ पर्वतावभिप्रवर्तेयातां दक्षिणश्चोत्तरश्च तुस्तूर्षमाणौ न हैनं स्तृण्वीयातामथ य एनं द्विषन्ति यांश्च स्वयं द्वेष्टि त एवैनं परिम्रियन्ते ॥ १२ ॥

अथातो निःश्रेयसादानमेता ह वै देवता अहं-

---

पादपीडनेन पातालं नयन्तौ विश्वावकाशं स्वदेहेन व्यवस्यन्ता-विति न हैनं स्तृण्वीयातां एनं एतान् विदुषः ह प्रसिद्धं नैव स्तृण्वीयातां नैव हन्यातां नैव हिंस्यातां अतिक्रमण नैव कुर्वी-यातां यदुक्तमेभिस्तदेव कुर्यातामित्यर्थः । अथैवं सकलदैवपरि-मरज्ञानानन्तरं ये दैवपरिमरज्ञानशून्या गतभाग्या एन दैवप-रिमरज्ञानवन्तं द्विषन्ति असहिष्णवोऽपकारान् कुर्वन्तो न बहु मन्यन्ते। यांश्च प्रसिद्धान् गतभाग्यान्, चकारः पूर्वेषामपि समु-च्चयार्थः, स्वयं दैवपरिमरज्ञानवान् द्वेष्टि न सहते कुतश्चिदभा-ग्ययोगात्त एनं सर्वे परिम्रियन्ते, एनं दैवपरिमरज्ञानवन्तं ते एतस्मिन् द्वेषिण एतस्य द्वेष्याश्च सर्वे निखिलाः सपुत्रपशुबान्धवा इत्यर्थः । परिम्रियन्ते सर्वतो निधनं गच्छन्ति ॥ १२ ॥

अथ परिमरगुणोपासनानन्तरं अतो यस्मात् फलान्तरापे-क्षाऽस्मात्कारणान्निःश्रेयसादानं, निःश्रेयसं सर्वस्मादुत्कर्षरूपो गुणो मोक्षविशेषः, तद्गुणविशिष्टस्य प्राणस्यादानं स्वीकारः क्रियत इति शेषः । तत्र प्राणो निःश्रेयसमिति नाविचार्य स्नेहादिना स्वीकृतं किन्तु महता सङ्घर्षेण विचारितं, एतदर्थ-

# श्रेयसे विवदमाना अस्माच्छरीरादुच्चक्रमुस्तद्वाप्रा-णत्* शुष्कं दारुभूतं शिश्येऽथैनद्वाक् प्रविवेश तद्वाचा-

---

माख्यायिकामाह, सर्वा निखिला ह किल वै प्रसिद्धा देवता देवताशब्दवाच्या वागाद्याः, अहंश्रेयसे अहंवादेनात्मनः श्रेय आधिक्य, तदर्थं विवदमानाः मामन्तरेण का भवत्य इति स्वव्यतिरिक्ताः परास्तिरस्कुर्वत्य इत्यर्थः। स्वयं निश्चयं कर्तुमशक्ताः प्रजापतिं पितरमेत्योचुर्भगवन् को नः श्रेष्ठ इति, स हि प्राणे श्रैष्ठ्यं जानन्नपि स्वसुतानां दुःखं दातुमशक्तोऽमुमुपायं प्रत्यपद्यत, यस्मिन व उत्क्रान्ते इदं शरीरं पापिष्ठं शवसमानं भविष्यति स वः श्रेष्ठ इत्युक्ते तथैव श्रैष्ठ्यनिर्धारणार्थं क्रमेणोत्क्रमण कृतवत्य इत्याह, अस्मात्प्रत्यक्षाच्छरीरान्मनुष्यादिदेहादुच्चक्रमुर्वागादयः क्रमेण उत्क्रमणं चक्रुः। तत् स्थूलशरीरं वागादीनां प्रत्येकमुत्क्रमणे वदनादिव्यापारमकुर्वत् स्थित। यदा पुनर्मुख्यप्राण उत्क्रान्तस्तदा दारुभूतं चिताकाष्ठसमानमस्पृश्य सर्वव्यापारशून्य शिश्ये शयनं कृतवत्। एवं व्यतिरेकेण निश्चये सम्पन्नेऽप्यतिस्पर्धावशादन्वयमन्तरेण निश्चयमनधिगच्छन्तोऽन्वयमप्यनुष्ठितवन्त इत्याह, अथ शरीरस्य दारुभूतस्य शयनानन्तरं एतच्छरीरं वाक् वागिन्द्रियं प्रविवेश प्रवेशं कृतवती। तत् शरीरं वाचा वागिन्द्रियेण वदत् वदनव्यापारं कुर्वत् शिश्य एव शयनं कृतवदेव। न तूत्थितवत्। वाक्-

---

* तद्वाप्राणत इति D. तद्वाक्णत इति A. चाशुद्धं।

वदंश्चिष्ठ्य एवाथैनच्चक्षुः प्रविवेश तद्वाचा वदच्चक्षुषा पश्यच्छिष्य एवाथैनच्छ्रोत्रं प्रविवेश तद्वाचा वदच्चक्षुषा पश्यच्छ्रोत्रेण शृण्वच्छिष्य एवाथैनन्मनः प्रविवेश तद्वाचा वदच्चक्षुषा पश्यच्छ्रोत्रेण शृण्वन्मनसा ध्यायच्छिष्य एवाथैनत्प्राणः प्रविवेश तत्तत एव समुत्तस्थौ ता वा एताः सर्वा देवताः प्राणे निःश्रेयसं विदित्वा प्राणमेव

---

प्रवेशानन्तरं चक्षुरिन्द्रियं प्रविष्टं ततश्चावलोकनं वदनञ्चाभूत्। अनन्तरं श्रोत्रेन्द्रियं प्रविष्टं ततश्च श्रवणावलोकनवदनान्यभूवन्। अनन्तरं मनः प्रविष्टं ततश्च ध्यानश्रवणावलोकनवदनान्यासन् न तु शरीरमुत्थितवदित्येतत्पर्यायत्रयेणाह, अथैनच्चक्षुः प्रविवेश तद्वाचा वदच्चक्षुषा पश्यच्छिष्य* एव, अथैनत् श्रोत्रं प्रविवेश तद्वाचा वदच्चक्षुषा पश्यच्छ्रोत्रेण शृण्वच्छिष्य एव, अथैनत् मनः प्रविवेश तद्वाचा वदच्चक्षुषा पश्यच्छ्रोत्रेण शृण्वन्मनसा ध्यायच्छिष्य एव स्पष्टं, अथ वाक्चक्षुःश्रोत्रमनः-प्रवेशानन्तरमेतच्छरीरं वदत् पश्यत् शृण्वत् ध्यायत् प्राणो मुखविलान्तर्वर्त्ती पञ्चवृत्तिर्वायुविशेषः प्रविवेश प्रवेशं कृतवान्, तच्छरीरं तत एव तस्मात्प्राणप्रवेशादेव न त्वन्यस्मात्समुत्तस्थौ सम्यगुत्थानं कृतवत्, ते च वागादयः परित्यक्ताभिमानाः देवाः देवशब्दाभिधेयाः प्राणे शरीरोत्थापनहेतौ प्रकृष्टचेष्टावति निःश्रेयसं सर्वेभ्यो वागादिभ्य उत्कर्षणं

---

* सर्वत्र मूले द्वयोष्टीकयोश्च (B D.) शिष्ये, अपरासु तु शिश्ये ।

प्रज्ञात्मानमभिसम्भूय सहैवैतैः सर्वैरस्माच्छरीरादु-
च्चक्रमुस्ते वायुप्रविष्टा* आकाशात्मानः स्वरीयुस्तथो
एवैवं विद्वान् प्राणे निःश्रेयसं विदित्वा प्राणमेव
प्रज्ञात्मानमभिसम्भूय सहैवैतैः सर्वैरस्माच्छरीरादु-

---

विदित्वा प्राणमेव प्रकृष्टचेष्टावन्तं न त्वन्यं प्रज्ञात्मानं प्र-
ज्ञात्मनो भूम्न उपाधिभूत प्रसादं, अथवा प्राणे सति
प्रज्ञाया दर्शनादसति चादर्शनात्प्राणस्य प्रज्ञात्मत्वमविरुद्धम-
भिहितं, प्राणमेव प्रज्ञात्मानमिति अभिसम्भूय सर्वतः सम्भवनं
प्राप्तिं कृत्वा, सहैवैतैः सर्वैरेतैः प्राणापानव्यानसमानोदानै-
र्निखिलैः सह, यथा प्राणवृत्तिभेदा आध्यात्मिकपरिच्छेदशून्
न्यास्तद्वद्वागादयोऽपीत्यर्थः, अस्मात् प्रत्यचाल्लोकात् तनुरूपात्
शरीराच्चचुराद्यभिमानादित्यर्थः, उच्चक्रमुः उत्क्रमणञ्चक्रुः। ते
परित्यक्ततदभिमानाः वागादयः वायुप्रतिष्ठा वायावाधि-
दैविके प्राणे प्रतिष्ठा प्राणो निःश्रेयसमिति ज्ञानमाश्रयो
येषां ते वायुप्रतिष्ठाः, आकाशात्मानः आकाशवत्सर्वगत आत्मा
येषां ते आकाशात्मानः स्वरीयुः स्वः स्वर्गमग्न्यादिस्वरूपमीयुः
ययुर्गतवन्त इत्यर्थः। तथो एव अपि तद्वदेव यथा देवाः न
त्वन्यथा, एवं विद्वान् उक्तेन प्रकारेण प्राणे निःश्रेयसं जानन्
सर्वेषां भूतानां निखिलाना स्थिरजङ्गमानां प्राणमेव प्रज्ञात्मा-
नमभिसम्भूय सहैवैतैः सर्वैरस्माद्व्याख्यातात् शरीराच्छरीरा-

---

* वायुप्रतिष्ठा इति टी०।

त्क्रामति स वायुप्रविष्ट* आकाशात्मा स्वरेति स तद्गच्छति यत्रैते देवास्तत्प्राप्य यदमृता देवास्तदमृतो भवति य एवं वेद ॥ १४ ॥

अथातः पितापुत्रीयं सम्प्रदानमिति चाचक्षते

---

भिमानादुत्क्रामति उत्तिष्ठति शरीराभिमानं परित्यजतीत्यर्थः। स वायुप्रतिष्ठ आकाशात्मा स्वरेति व्याख्यातं। उपासकस्यैकत्वादेकवचनं विशेषः। एवं प्राणो ब्रह्मेत्युपासनं स्याद्यत इति तत्फलमाह, स्वः स्वर्गं प्राणं ब्रह्मज्ञानोत्पादनद्वारानन्दात्मानं वेति। स्वरेतीत्येतद्व्याकरोति, स उपासकस्तद्भवति उक्तं प्राणस्वरूपं भवति। तच्छब्दार्थमाह, यत्र यस्मिन् प्राणस्वरूपे एते देवाः एते वागादयोऽग्न्याद्यात्मका देवशब्दाभिधेयाः। ननु वागादीनामग्न्याद्याप्तिलक्षणममृतत्वं तत्प्राप्तौ, उपासकस्य पुनः तत्प्राप्तौ किं स्यादित्यत आह, तत्प्राणस्वरूपं प्राप्य अवाप्य तदमृतः तत् सर्वपरिच्छेदशून्यममृतत्वं यस्य स तदमृतो भवति स्पष्टं, यदमृताः यत् प्रसिद्धं सर्वपरिच्छेदशून्यममृतत्वं येषां ते यदमृता देवा वागाद्याः ॥ १४ ॥

इदानीं प्राणविदः सम्प्रत्तिकर्माह, अथ प्राणोपासनानन्तरं, अतो यस्मान्मरणमवश्यंभावि अस्मात्कारणात्, पितापुत्रीयं पित्रा पुत्राय दीयमानं पितापुत्रीयं, सम्प्रदानं सम्यक् प्रदीयत इति सम्प्रदानं सम्प्रत्तिकर्मेत्यर्थः। इति चाचक्षते

---

* वायुप्रतिष्ठ इति टी०।　　† तद्भवतीति टी०।

## पिता पुत्रं प्रेष्यन्नाह्वयति नवैस्तृणैरगारं संस्तीर्याग्निमुपसमाधायोदकुम्भं *सपात्रमुपनिधायाहतेन वाससा सम्प्रच्छन्नः †पिता श्येत एत्य पुत्र उपरिष्टादभिनिपद्यत इन्द्रियैरिन्द्रियाणि संस्पृश्यापि ‡वास्मा आसीनायाभिमुखायैव सम्प्रदध्यादथास्मै सम्प्रयच्छति वाचं मे

अनेनैव प्रकारेण कथयन्ति। पिता पुत्रं प्रेष्यन् कुतश्चिन्निमित्तात् मरिष्यामीति निश्चित्येत्यर्थः, पिता जनकः पुत्रमौरस तनयमाह्वयति आकारयति सम्प्रत्तिकर्मार्थं। आकारणे इतिकर्तव्यतामाह, नवैस्तृणैर्नवीनैः कुशादिभिस्तृणैरगारं सस्तीर्य गृहमाच्छाद्य अग्निमुपसमाधाय तस्मिन् गृहे श्रौतं स्मार्तं वाग्निं संस्थाप्य अग्नेरुत्तरतः पूर्वतो वा उदकुम्भं सपात्रमुपनिधाय नीरेण पूर्णं कलशं व्रीहिपूर्णपात्रसहितं समीपे संस्थाप्य अहतेन वाससा सम्प्रच्छन्नः नवीनेन वस्त्रेण संवृतः, स्वयं श्येतः श्वेतः सितमाल्याम्बरधर इत्यर्थः, एत्य आगत्य आह्वयतीत्यन्वयः, पुत्रे आगते तनये उपरिष्टादुपरिभागे अभिनिपद्यते सर्वतो नितरां प्राप्नोति। अभिनिपदनेतिकर्तव्यतामाह, इन्द्रियैश्चक्षुरादिभिः स्वकीयैरस्य पुत्रस्य इन्द्रियाणि चक्षुरादीनि संस्पृश्य सम्यक् स्पर्शनं विधायाभिनिपद्यत इत्यन्वयः। यद्वा पिता श्येते पुत्रोऽभिनिपद्यत इति पाठाद-

---

* सपात्रमुपनिनीयेति B C.

† स्वयं श्येत इति टी०।

‡ अपि वास्याभिमुखत एव आसीनायास्मा इति टी०।

त्वयि दधानीति पिता वाचं ते मयि दध इति पुत्रः प्राणं मे त्वयि दधानीति पिता प्राणं ते मयि दध इति पुत्रश्चक्षुर्मे त्वयि दधानीति पिता चक्षुस्ते मयि दध इति पुत्रः श्रोत्रं मे त्वयि दधानीति पिता श्रोत्रं ते मयि दध इति पुत्रोऽन्नरसान्मे त्वयि दधानीति पितान्नरसांस्ते मयि दध इति पुत्रः कर्माणि मे त्वयि दधानीति पिता कर्माणि ते मयि दध इति पुत्रः*

---

न्वयः। पश्चान्तरमाह, अपि वा अथवाऽस्य पुत्रस्याभिमुखत एव सम्मुखत एव न त्वन्यथा, उपरिपदस्य लोकगर्हितत्वादित्यर्थः, आसीत उपविशेत्। अथानन्तरमस्मै पुत्राय सम्प्रयच्छति सम्यक् प्रयच्छेत् वक्ष्यमाणेन विधिना स्ववागादीन् दद्यादित्यर्थः, वाचं वागिन्द्रियं मे मम पितुर्मुमूर्षोः त्वयि पुत्रे ममानृणस्य विधातरि दधानि धारयाणि, इत्यनेन प्रकारेण पिता जनक आहेति शेषः। एवं पित्रोक्ते वाचं वागिन्द्रियं ते तव पितुर्मयि पुत्रे दधे धारये इत्यनेन प्रकारेण पुत्रस्तनय आहेति शेषः। प्राणं मे त्वयि दधानीति पिता, प्राणं ते मयि दध इति पुत्रः। चक्षुर्मे त्वयि दधानीति पिता, चक्षुस्ते मयि दध इति पुत्रः। श्रोत्रं मे त्वयि दधानीति पिता, श्रोत्रं ते मयि दध इति पुत्रः। अन्नरसान् मे त्वयि दधानीति पिता, अन्नरसांस्ते

---

* शरीरं मे त्वयि दधानीति पिता शरीरं ते मयि दध इति पुत्र इति A पुस्तके समधिकः पाठः।

सुखदुःखे मे त्वयि दधानीति पिता सुखदुःखे ते मयि दध इति पुत्रः आनन्दं रतिं प्रजातिं* मे त्वयि दधानीति पितानन्दं रतिं प्रजातिं ते मयि दध इति पुत्र इत्यां मे त्वयि दधानीति पितेत्यां ते मयि दध इति पुत्रो मनो मे त्वयि दधानीति पिता मनस्ते मयि दध इति पुत्रः प्रज्ञां मे त्वयि दधानीति पिता प्रज्ञां

---

मयि दध इति पुत्र.। कर्माणि मे त्वयि दधानीति पिता, कर्माणि ते मयि दध इति पुत्रः। सुखदुःखे मे त्वयि दधानीति पिता, सुखदुःखे ते मयि दध इति पुत्रः। आनन्दं रतिं प्रजातिं* मे त्वयि दधानीति पिता, आनन्द रतिं प्रजाति ते मयि दध इति पुत्रः। इत्यां मे त्वयि दधानीति पिता, इत्यां ते मयि दध इति पुत्रः। धियो विज्ञातव्यं कामान्मे त्वयि दधानीति पिता, धियो विज्ञातव्यं कामांस्ते मयि दध इति पुत्र.। प्राणं घ्राणं मुख्यञ्च प्राणं। चक्षुःश्रोत्रे स्पष्टे। अन्नरसान्मधुरादीन्। पूर्वं करणग्रहण, इत आरभ्य विषयग्रहणं, उभयत्र करणविषययोः समर्पणार्थं कर्माणि आदातव्यानि। सुखदुःखे शरीरोपभोग्ये। आनन्द रतिं प्रजातिं मैथुनस्यावसाने आनन्दस्ततः प्रीतिः ततः प्रजातिः पुत्राद्याः। इत्या गतीः। धियोऽन्तःकरणवृत्तीः, विज्ञातव्यं तासां विषयः। कामानिच्छाविशेषान्। अन्यत्रवस्वपि पर्यायेषु वाक्पर्यायवद्व्याख्येय। पाठान्तर इत्यां ते मयि दध

---

* प्रजातीरिति B C.

ते मयि दध इति पुत्रो यद्यु वा उपाभिगदः स्यात् समासेनैव ब्रूयात्प्राणान्मे त्वयि दधानीति पिता प्राणांस्ते मयि दध इति पुत्रोऽथ दक्षिणावृदुपनिष्क्रामति तं पितानुमन्त्रयते यशो ब्रह्मवर्चसं कीर्तिस्त्वा जुषतामित्यथेतरः सव्यमन्वंसमभ्यवेक्षते पाणिनान्तर्द्धाय वसनान्तेन वा प्रच्छाद्य स्वर्गान् लोकान्

---

इति पुत्र इत्यनन्तरं मनो मे त्वयि दधानीति पिता मनस्ते मयि दध इति पुत्रः प्रज्ञां मे त्वयि दधानीति पिता प्रज्ञां ते मयि दध इति पुत्र इति। यद्यु वा उपाभिगदः प्रत्येकं वक्तुमसमर्थः स्यात्समासेनैव वदेत्प्राणान्मे त्वयि दधानीति पिता प्राणांस्ते मयि दध इति पुत्र इति। अथानन्तरं दक्षिणावृत् पितुः प्रदक्षिणप्रकारेण प्राङ् प्राच्यां दिशि उपनिष्क्रामति पितुःसमीपदेशाद्बहिर्गच्छति, तं पुत्रं पिता जनकः अनुमन्त्रयते पश्चात् सम्बोध्य ब्रूते। अनुमन्त्रणवाक्यमाह, यशः लौकिकी बन्धुजनादिभ्यः कीर्तिः, ब्रह्मवर्चसं ब्रह्मतेजः, अन्नाद्यं अन्नञ्च तदाद्यञ्च अन्नाद्यं, कीर्तिः शास्त्रीयं यशः, त्वा त्वां पुत्र जुषतां सेवतामित्यनेन प्रकारेणानुमन्त्रयत इत्यन्वयः। अथ एतदनुमन्त्रणानन्तरं, इतरः पुत्रः सव्यं वामं अंसं बाहुमूलं स्कन्धमन्वेक्षते पश्चादवलोकयते। अवलोकनप्रकारमाह, पाणिना करेणान्तर्धाय व्यवधाय वसनान्तेन वा, वाशब्दः पूर्वेण सहेच्छाविकल्पार्थः, प्र-

कामानाप्नुहीति स यद्यगदः स्यात्पुत्रस्यैश्वर्यं पिता वसेत् परि वा व्रजेद्यद्यु वै प्रेयात्तथैवैनं समापयेयुर्यथा समापयितव्यो भवति यथा समापयितव्यो भवति॥ १५॥

इत्यारण्यके कौषीतकिब्राह्मणोपनिषदि द्वितीयोऽध्यायः समाप्तः॥ *॥

---

च्छाद्य आच्छाद्य पितरं प्रत्याह, स्वर्गान् लोकान्निरतिशयप्रीतिजनकान् देशविशेषान् कामान् कमनीयान् तत्रस्थितान् वा भोगानाप्नुहि प्राप्नुहि, इत्यनेन प्रकारेण ब्रूयादित्यनुषङ्गः। एवं पुत्रेण कृते स पिता यदि कथञ्चिदगदः स्यान्नीरोगो भवेत्पुत्रस्य तनयस्यैश्वर्ये विभवे पिता जनको वसेत् निवासं कुर्यात्प्रवासिवत् गृहकार्यं किमपि नानुसन्दध्यादित्यर्थः। परि वा व्रजेत् वाशब्दः पक्षान्तरार्थः, यदि वैराग्यं तदा परित्यजेत् सर्वसङ्गपरित्यागं कुर्यादित्यर्थः। यद्यु वै अपि कथञ्चित्प्रसिद्धं प्रेयात्परलोकं गच्छेद्यदेव प्रसिद्धमेव वागादिकं न त्वन्यदेतं पुत्रं प्रति समापयति सम्यक् प्रापयति, तथा तद्वदेव समापयितव्यो भवति सम्यक् प्रापणीयो भवति सर्वैः कामैरिति शेषः। तथा समापयितव्यो भवति व्याख्यातं। वाक्याभ्यासोऽध्यायपरिसमाप्त्यर्थः॥ १५॥

इति श्रीशङ्करानन्दभगवतः कृतौ कौषीतकिब्राह्मणोपनिषद्दीपिकायां द्वितीयोऽध्यायः समाप्तः॥ *॥

प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण च तं हेन्द्र उवाच प्रतर्दन

यस्मा द्धेतोः पर्यङ्कोपासना प्राणोपासना च विविधगुणोक्ता तां ब्रह्मविद्यां विवक्षुः तस्यामास्तिक्य जनयितु प्रतर्दनं काश्यं देवेभ्योऽभ्यधिकबलत्वद्व्यादिमन्तं ब्रह्मविद्यार्थिनं शिष्यं देवराजञ्च सत्यपाशनिबद्धं मनुष्येषु ब्रह्मविद्यां वक्तुमनिच्छन्तमपि गुरु सम्पाद्याख्यायिकामाह, प्रतर्दनः प्रकर्षेण तर्दयति भर्त्सयत्यभिभवति स्वशत्रूनिति सार्थकनामा प्रतर्दनः, ह किल दैवोदासिः दिवोदासस्य काशिराजस्य पुत्रो दैवोदासिः, इन्द्रस्य देवराजस्य परमैश्वर्यसम्पन्नस्य प्रियं धाम प्रियं स्थानं स्वर्गमिति यावत्, उपजगाम प्राप्तवान्। तत्प्राप्तौ कारणमाह, युद्धेन च पौरुषेण च समरयज्ञेनानेकभटपश्वाहुतिदीप्यमानशस्त्राग्निना पुरुषसम्बन्धिनोत्साहेन च स्वर्गमर्मपरिज्ञानेनेत्यर्थः। चकारावुभयोरपि कारणत्वसमुच्चयार्थौ। तं समरशौण्डमुत्साहिनं स्वर्गमागतं प्रतर्दनं ह किल इन्द्रः युद्धपौरुषाभ्यां परितोष प्राप्तो देवराज उवाच उक्तवान्। इन्द्रोक्तिमाह, प्रतर्दन हे प्रतर्दन वरमभिलषितमर्थं ते तुभ्यं प्रतर्दनाय मत्परितोषकारिणे ददानि प्रयच्छानि ददामीत्यर्थः, इत्यनेन प्रकारेण उवाचेत्यन्वयः। स इन्द्रेणोक्तः ह किल उवाच प्रतर्दनः स्पष्टं। प्रतर्दनोक्तिमाह, त्वमेव मत्पुरतः स्थितो हिताहितज्ञो देवराजो न त्वन्यो मे मह्यं प्रतर्दनाय हितार्थिने मदर्थमित्यर्थः, वृणीष्व हितमिष्टं वार्थं प्रार्थयस्व। प्रार्थ्यमानं वरमाह, यं प्रसिद्ध-

*वरं वृणीष्वेति स होवाच प्रतर्दनस्त्वमेव मे वृणीष्व यं त्वं मनुष्याय हिततमं मन्यस इति तं हेन्द्र उवाच न वै †वरोऽवरस्मै वृणीते त्वमेव वृणीष्वेत्यवरो वै ‡किल

मभीष्टमर्थं त्वं सर्वज्ञो देवराजः मनुष्याय अज्ञानकानना-न्तर्वर्तिने ऽनेकशुभाशुभव्यामिश्रकर्मफलदावाग्निसन्तप्तगात्राय मनुष्यजातियुजे हिततममतिशयेन हितं नातः परं हितमित्यर्थः, मन्यसे निश्चिनोषि, इति अनेन प्रकारेण। तमिन्द्रं प्रत्येवं-वादिनं प्रतर्दनं ह किल इन्द्रो देवराजो ब्रह्मविद्यां दातु-मशक्त उवाच उक्तवान् लौकिकं नयं। इन्द्रोक्तिमाह, न वै वरः परस्मै वृणीते वै प्रसिद्धं, परस्मै अन्यार्थं, वरो वरं न वृणी-तेऽन्यो न प्रार्थयते यत एवमतः स्वार्थं वरं त्वमेव वृणीष्वेति स्पष्टं। एवमिन्द्रेणोक्ते अवरः वरं ददानीति प्रतिज्ञाय भव-ता निर्दिष्टोऽर्थो दत्तः स्यादिति शेषः, वै प्रसिद्धो मनुष्येणा-ज्ञानावृतदृष्टिना मया याचितः तर्हि तदा किल निश्चितं मे मह्यं हिताहितज्ञानशून्यायेति होवाच प्रतर्दनः ह किल एव-मुक्तवान् प्रतर्दनो देवराजं, स्वार्थो वरोऽयमिति। अथो अथ प्रतर्दनवाक्यानन्तरं खलु निश्चितमिन्द्रः सत्यवादिनामग्रगण्यो देवराजः सत्यात् वरं ते ददानीति स्वप्रतिज्ञानात् यथार्थवच-नादेव नेयाय नापजगामैव प्रतर्दनार्थं वरदातापि स्वयं स्वस्मै वरं याचितवान्तु लौकिकं नयमङ्गीकृत्य कारेत्यन्वयः। सत्या-

* वरं ते ददानीति टी॰ F. G पुस्तकयोश्च।

† वरः परस्मा इति टी॰. F. G ‡ तर्हि किलेति टी॰. F. G.

मेति* होवाच प्रतर्दनोऽथो खल्विन्द्रः सत्यादेव नेयाय सत्यं †हीन्द्रस्तं हेन्द्र उवाच मामेव विजानीह्येतदेवाहं मनुष्याय हिततमं मन्ये यन्मां विजानीयात्त्रिशीर्षाणं

---

दनपगमने कारणमाह, सत्य हीन्द्रः सत्य यथार्थस्वरूपं यत्किञ्चिद्वागर्थस्वरूपं इन्द्रो देवराजो हि यस्मात्तस्मान्नेयायेत्यन्वयः। स सत्यपाशाभिबद्ध इन्द्रो ह किल उवाच उक्तवान्, प्रतर्दनार्थमात्मानं वरं याचितवानित्यर्थः। इन्द्रोक्तिमाह, मामेवास्मत्प्रत्ययव्यवहारयोग्यमानन्दात्मानमेव न त्वन्यं विजानीहि अवगच्छ साक्षात्कुर्वित्यर्थः। एतदेव मे ज्ञानमेव न त्वन्यत्, अहं भवते वरस्य दाता याचिता च, मनुष्याय हिततमं व्याख्यातं मन्ये निश्चिन्वे। एतच्छब्दार्थमाह, यत्प्रसिद्धं वेदान्तेषु ब्रह्मविदाप्नोति परमित्यादिना मामुक्तमानन्दात्मानं विजानीयात् साक्षात् कुर्यादित्यर्थः, यन्मां विजानीयादेतदेव हिततमं मन्य इत्यन्वयः। ननु तव ज्ञाने तवान्यस्य वा यदि कश्चनातिशयोऽभूत् तर्हि तद्धिततमं न त्वन्यथेतिशङ्कायामद्वैतज्ञानं गुरुमातृबधप्रमुखपापोन्मूलकं, अत आह, त्रिशीर्षाणं त्रिशीर्षं त्वाष्ट्रं त्वष्टुरपत्यं विश्वरूपमहनम् निपातितवान्, अरुन्मुखान् यतीन् रुच्छब्दः वेदाध्ययनं तेन उपनिषदर्थविचारो ब्रह्ममीमांसापरपर्यायो लक्ष्यते, तद्येषां मुखे नास्ति ते अरुन्मुखाः तान् यतीन् प्रयत्नवतश्चतुर्थाश्रमिणः सालावृकेभ्यः सालावृकाणां अपत्यानि साला-

---

* म इति। इति टी॰ F. G.   † हीन्द्रः स हेन्द्र इति टी॰. F. G.

त्वाष्ट्रमहनमरुन्मुखान् यतीन् *सालावृकेभ्यः प्रायच्छं बह्वीः सन्धा अतिक्रम्य दिवि †प्रह्लादीयानतृणमहमन्तरिक्षे पौलोमान् पृथिव्यां ‡कालकाञ्जांस्तस्य मे

वृकेयाः सालावृका इति यावत् तेभ्योऽरण्यश्वभ्य इत्यर्थः, प्रायच्छं प्रकर्षेण वज्रेण शतधा विभज्य दत्तवानद्यापि च तेषां मस्तकविपाकाः करीरा दृश्यन्ते। बह्वीर्भूयसीः स्वरूपतः सङ्ख्यातश्च सन्धाः सन्धीनित्यर्थः, अतिक्रम्य स्पष्टं, दिवि स्वर्गे प्रह्लादीन् प्रह्लादिनः प्रह्लादेन नित्यसम्बन्धिनः अनेककोटिसङ्ख्याकान्महामायाननेकच्छिद्रघातिनोऽसुरान् प्रह्लादपरिचारकानित्यर्थः, अतृणं हिंसितवान् अहमात्मज्ञानीन्द्रस्तुभ्यं वरस्य दाता अन्तरिक्षे भुवर्लोके पौलोमान् पुलोमसम्बन्धिनोऽसुरविशेषान् बह्वीः सन्धा अतिक्रम्य अतृणमित्यनुवर्त्ततेऽत्र वक्ष्यमाणे च। पृथिव्यां भूर्लोके §कालकाञ्ज्यान् कालकञ्जसम्बन्धिनोऽसुरान् भूयसां परस्परसम्बन्धस्यावश्यंभावित्वात् कालकञ्जा एव कालकाञ्ज्याः तान्। ननु किं प्रकृते तावतेत्यत आह। तस्य गुरुब्राह्मणबधस्य कर्तुः सन्न्यासिनाञ्च श्वभ्यो दातुर्लोकत्रयेऽपि यज्ञादिसम्पन्नमहामायासुरसङ्घस्योपसंहर्तुरात्मज्ञानिनोऽन्येन मनसापि कर्तुमशक्यं कर्म

* शाला० इति D टीकायाञ्च कुत्रचित्।

† प्रह्लादीनिति F C प्रह्लादीनिति B E

‡ कालकाञ्ज्यानिति B C कालखञ्जानिति D. कालकञ्ज्यानिति F.

§ कालखञ्जान् कालखञ्जसम्बन्धिन इति D

तत्र *न लोम चनामीयत स यो मां वेद न ह वै तस्य केन चन कर्मणा लोको मीयते न स्तेयेन न भ्रूणह-

कुर्वतो मे मम इन्द्रस्य तवोपदेशकस्य तत्र तस्मिन्नतिक्रूरे कर्मणि क्रियमाणे ब्रह्मवधादिलक्षणे न लोम च मा मीयते न लोमापि अत्यल्पोऽपि केश इत्यर्थः, मा मीयते न मीयते न हिंस्यते उक्तेन केनचित्कर्मणा। ननु एतत् भवत एव न त्वस्मदादेरित्यत आह, स मदन्यो मज्ज्ञानी प्रसिद्धः यः यः कश्चिद्देवो मनुष्यो वा मां वेद आनन्दात्मानमिन्द्रं विजानीयात् अहमानन्दात्मास्मीति साक्षात् कुर्यात् नास्य केन च कर्मणा लोको मीयते अस्य मामानन्दात्मानं साक्षात् कुर्वतः, केन च वक्ष्यमाणेन भ्रूणहत्यादिना कर्मणा पातकेन शास्त्रनिषिद्धेन व्यापारेण लोकः कृतस्य करिष्यमाणस्य च सुकृतस्य फलं मुत्युदर्कं न मीयते न हिंस्यते। हिंसकानि कर्माण्येकदेशेन दर्शयन्नाह, न मातृवधेन न पितृवधेन न स्तेयेन न भ्रूणहत्यया, मातापितरौ प्रसिद्धौ तयोर्वधो प्राणत्यागानुकूलव्यापारो लोकद्वयभ्रंशहेतुः प्रत्येकं प्रसिद्धः, स्तेयं सुवर्णपरिमितसुवर्णस्य ततोऽप्यधिकस्य वा स्वामिनः परोक्षमादानं तेन, भ्रूणो वेदस्य वेदयोर्वेदानां वाधिगतार्थेन अध्ययनेन सह वर्तमानो द्विजोत्तम इत्यर्थः, तस्य मनसा वाचा कर्मणा वापराधशून्यस्य स्वहस्तादिना वधो भ्रूणहत्या तया। कर्मसामान्यस्य विशेषो

* न लोम च मा मीयत स यो मा विजानीयान्नास्य इति टी॰ F G (मामीयेति B)

त्वया न मातृवधेन न पितृवधेन नास्य पापं चकृषो मुखान्नीलं वेतीति ॥ १ ॥

स होवाच प्राणोऽस्मि प्रज्ञात्मानं मामायुरमृतमित्युपास्वायुः *प्राणः प्राणो वा आयुर्यावद्ध्यस्मिंछरीरे

ऽयमिति दर्शयितुं पर्यायचतुष्टयेऽपि नकारचतुष्टयं। नास्य पापं चकृषो मुखान्नीलं वेतीति किं बहुनाऽस्य मदात्मज्ञानिनः पापं चन चकृषः पापमपि कर्तुमिच्छोः मुखात् वदनात् नीलं मुखकान्तिस्वरूपं नीलं नीलिमाश्रयस्वरूपं वा मुखात्कण्ठजिह्वादिवदनात् न वेति न व्येति नापगच्छति, इतिशब्दः प्रकृतब्रह्मज्ञानस्तुतिपरिसमाप्त्यर्थः ॥ १ ॥

एवं ब्रह्मज्ञानं स्तुत्वा आत्मनो ब्रह्मणः स्वरूपं विवक्षुः स इन्द्र ह किल उवाच उक्तवान्, प्राणः प्राणशब्दाभिधेयः प्राणोपाधिको वाऽस्मि भवामि प्रज्ञात्मा बुद्धिवृत्तिप्रतिफलितप्रज्ञानैकस्वभावः तं प्राणं प्रज्ञात्मस्वरूपं मामानन्दात्मानमिन्द्रं आयु सर्वप्राणिनां जीवनकारणं प्राणापानव्यतिरिक्तं प्राणापानयोराश्रयभूतं अमृतं मरणशून्यं षड्भावविकारशून्यमित्यर्थः। इति प्राणः प्रज्ञात्मेन्द्रः आयुरमृतमस्मीत्यनेन रूपेण उपास्व यावदात्मसाचात्कारं विजातीयप्रत्ययशून्यं सजातीयप्रत्ययप्रवाहं कुरु। नन्वेकस्यैव भवत इन्द्रस्य प्राणः प्रज्ञात्माऽऽयुरमृतमिति गुणाः किमित्याशङ्क्येत्याह,

* स प्राणः प्राणो वा आयुः प्राण उ वा अमृत यावद्ध्यस्मि न्निति टी०. F G

प्राणो वसति तावदायुः प्राणेन *ह्येवास्मिंल्लोकेऽमृत-त्वमाप्नोति प्रज्ञया सत्यं सङ्कल्पं स यो †मामायुरमृ-तमित्युपास्ते सर्वमायुरस्मिंल्लोक एत्याप्नोत्यमृतत्वम-

आयुरुक्तं यत् स प्राण उक्तः। ननु आयुषः प्राणत्वेऽपि न प्राणस्यायुष्ट्वं यथा सास्नाया गोत्वेऽपि न गोः सास्नात्वमित्यत आह, प्राणो वा आयुः प्राण एवायुः न त्वङ्गाङ्गिगुणगुण्या-दिभेदः। न त्वेतदायुष एव किन्त्वमृतत्वस्यापीत्याह प्राण उ वा अमृतं अमृतमपि प्राण एव। प्राणस्यायुष्ट्वममृतत्व-ञ्चोपपादयति, यावत् यावन्तं कालं हि यस्मात् अस्मिन् प्रत्यक्षे शरीरे शीर्णावयवे कलेवरे प्राणो वसति तावदायुः तावन्तं कालं स्पष्टमन्यत्। इदानीममृतत्वमुपपादयति, प्रा-णेन ह्येव यस्मात्प्राणेनैव न तु शरीरेणापि अमुष्मिन् परोक्षे लोके स्वर्गादौ अमृतत्वं सुखं प्राप्नोति स्पष्टं। ननु प्राणस्य क्रियाशक्तेर्भवतः किं प्रज्ञयेत्यत आह, प्रज्ञया ज्ञानशक्तिरूपेण सत्यं सत्यवचनं निष्प्रपञ्चं ब्रह्म वा सङ्कल्पमिदं मे स्यादित्येवं रूप मनसः प्रचारमधिगच्छतीति शेषः। एवं प्रज्ञादीनामुपयोग-मुक्त्वायुष्ट्वामृतत्वोपासनयोः फलमाह, स प्रसिद्ध उपासको यः यः कश्चिन्मे मम इन्द्रस्य प्राणात्मनोऽपृथग्भूतमायुरमृतमिति व्याख्यातं उपास्ते स्पष्टं, य उपास्ते स इत्यन्वयः, सर्वमायुरस्मिन् लोक एति निखिलं शतसंवत्सरमायुराप्नोति। आयुरुपासनस्य

* ह्येवामुष्मिन्निति टी॰ F G　　† म आयुरिति टी॰ F.

**क्षितिं स्वर्गे लोके तद्धैक आहुरेकभूयं वै प्राणा गच्छन्तीति न हि कश्चन शक्नुयात् सकृद्वाचा नाम प्रज्ञापयितुं चक्षुषा रूपं श्रोत्रेण शब्दं मनसा *ध्यानमेकभूयं वै प्राणा †भूत्वैकैकमेतानि सर्वाणि प्रज्ञापयन्तीति**

फलमुक्तामृतत्वोपासनस्य फलमाह, आप्नोत्यमृतत्वमक्षितिं स्वर्गे लोकेऽक्षयममृतत्वं स्पष्टमन्यत्। प्रतर्दनः प्राणशब्दं श्रुत्वा प्राणानामिन्द्रियाणामेकत्वं स्वयमवगतं प्रसङ्गात् पृच्छति, तत् तत्र प्राणानामनेकत्वे सति ह किल एके केचिद्विद्वांस आहुः कथयन्ति, एकभूय वै एकभावमेव प्राणा इन्द्रियाणि गच्छन्ति स्पष्टं, इत्यनेन प्रकारेणाहुरित्यन्वयः। प्राणानामेकभावे उपपत्तिं या कथयन्ति तामाह, न हि कश्चन शक्नुयात् हि यस्मात् कोऽपि न शक्नुयात् सकृदेकवारं युगपदित्यर्थः, वाचा नाम प्रज्ञापयितु चक्षुषा रूप श्रोत्रेण शब्द, वागिन्द्रियेण नाम वक्तुमिति शेषः, प्रज्ञापयितुं अवगमयितुमवगन्तुमिति यावत्, एतच्चक्षुःश्रोत्राभ्यां सम्बध्यते स्पष्टमन्यत्, मनसा ध्यातुं मनसा ध्यानं कर्तुमित्यनेन प्रकारेण एककाले व्यापाराभावेन एकभूयं वै प्राणा. व्याख्यात, पुनरभिधानं निगमनार्थं। उक्त हेतुं विवृणोति, एकैकं रूपरसादिकं सर्वाण्येव निखिलानि, एकैकमेवेत्यनेन सम्बध्यते, स्पष्टमन्यत्, एतानि प्रज्ञपयन्ति प्रकर्षेण निष्पादयन्ति गमयन्ति च। एकैकमेव

* ध्यातुमिति टी०, F G

† एकैकं सर्वाण्येतानि प्रज्ञपयन्ति। इति टी० G.

**वाचं वदन्तीं सर्वे प्राणा अनुवदन्ति चक्षुः पश्यत् सर्वे प्राणा अनुपश्यन्ति श्रोत्रं शृण्वत् सर्वे प्राणा अनुशृण्वन्ति मनो ध्यायत् सर्वे प्राणा अनुध्यायन्ति प्राणं**

---

प्रज्ञापयन्तीत्युक्तं श्रुत्याह्निकयाह, वाच वदन्तीं वागिन्द्रियं स्वव्यापारं कुर्वत् सर्वे प्राणा निखिलानीन्द्रियाणि राजानमिव वदन्तं सर्वे समागता अनुवदन्ति पश्चाद्वदनोपलक्षितं स्वव्यापारं कुर्वन्ति अनुमोदन्ते वा न लेकहेलया व्यापारं कुर्वन्तीत्यर्थः। यथा वाचो व्यापारे इतरेषां स्वव्यापारादुपरमस्तथा चक्षुःश्रोत्रमनःप्राणानां स्वव्यापारेऽपीत्येतदाह पर्यायचतुष्टयेन, चक्षुः पश्यत् सर्वे प्राणा अनुपश्यन्ति श्रोत्रं शृण्वत् सर्वे प्राणा अनुशृण्वन्ति मनो ध्यायत् सर्वे प्राणा अनुध्यायन्ति प्राणं प्राणन्तं सर्वे प्राणा अनुप्राणन्ति स्पष्टं, अनेनानेकावधानान्येकस्मिन् काले सूक्ष्मसूच्यग्रेण शतपत्रसहस्रपत्रवेधनवदस्पष्टविभिन्नकालानि व्याख्येयानि। इति प्रतर्दनप्रश्नपरिसमाप्त्यर्थः। प्रतर्दनप्रश्नस्येन्द्रोऽङ्गीकारेणैव उत्तरमुक्तवानित्याह, एवमु इत्थमेवैकहेलया न सर्वे प्राणाः स्वस्वव्यापारवन्तः, ह प्रसिद्धं सर्वजनीनानुभवेन, एतदेकहेलया सर्वेन्द्रियाणां स्वस्वव्यापाराकरणं, इति ह एवं किल इन्द्र उवाच स्पष्टं। ननु सर्वेषा तवोपाधित्वे समाने कः पक्षपातस्तव प्राणोऽस्मीत्यभिमान इत्यत आह, अस्ति त्वेव, तुशब्दः शङ्कानिराकरणार्थः, प्राणो हि मम निःश्रेयसात्मन उपाधिर्निःश्रेयसरूपः, प्रसिद्धं हि

प्राणन्तं सर्वे प्राणा अनुप्राणन्ति एवमु हैतदिति हेन्द्र उवाचास्ति त्वेव प्राणानां निःश्रेयसमिति ॥ २ ॥

जीवति वागपेतो मूकान् हि पश्यामो जीवति चक्षुरपेतोऽन्धान् हि पश्यामो जीवति श्रोत्रापेतो बधिरान् हि पश्यामो *जीवति मनोऽपेतो बालान् हि पश्यामो †जीवति बाहुच्छिन्नो जीवत्यूरुच्छिन्न इत्येवं

---

तस्य निःश्रेयसत्व प्राणमवादादौ, न च तदासीद्भविष्यति वा किन्तु अस्त्येव वर्तत एव न तु कदाचिन्न वर्तते प्राणानां प्राणस्य पञ्चवृत्तीनां निःश्रेयसं शरीरधारणोत्थापनादिकं तदाप्यञ्च स्वर्गमोक्षादिकं। इति निःश्रेयसवर्तमानत्वप्रतिज्ञापरिसमाप्त्यर्थः॥२॥

न चैतत् निःश्रेयसं वाक्चक्षुःश्रोत्राणामपि भवतीत्याह पर्यायत्रयेण सहेतुकं, जीवति वागपेतो मूकान् हि पश्यामो जीवति चक्षुरपेतोऽन्धान् हि पश्यामो जीवति श्रोत्रापेतो बधिरान् हि पश्यामः स्पष्टं, वाक्चक्षुःश्रोत्रैरपेतो रहितो जीवतीति प्रतिज्ञा, अत्र हेतुः मूकान्धबधिराणां दर्शनं। अयमर्थः। इन्द्रियाणां कार्यैकगम्यत्वात् कार्याभावे तदभाव इति। जीवति बाहुच्छिन्नो जीवत्यूरुच्छिन्नः स्पष्टं, पर्यायद्वयेन हस्तपादरहितस्य जीवनमुच्यते, इति प्रकृतपर्यायपरिसमाप्त्यर्थः। एकहेलयोभयत्र हेतुमाह, एवं हि पश्यामः हि यस्मादेवं छिन्नहस्तपादानां जीवनं पश्यामोऽवलोकयामः न च दृष्टेऽनुपपन्नं नामेत्यर्थः,

---

* जीवति मन इत्यादि F G. टीकायाञ्च नास्ति।

† अथ खलु जीवतीति F. G.

हि पश्याम इत्यथ खलु प्राण एव प्रज्ञात्मेदं शरीरं प-
रिगृह्योत्थापयति तस्मादेतदेवोक्थमुपासीतेति *सैषा
प्राणे सर्वाप्तिर्यो वै प्राणः सा प्रज्ञा या वा प्रज्ञा स

---

इत्यनेन प्रकारेणाङ्गीकृत्य इति इन्द्र उवाचेत्यन्वयः। अथ-
वाद्य इतिशब्दोऽङ्गीकारार्थः अन्यस्तु प्रकारार्थ इति। न चैत-
न्निःश्रेयसमस्त्येवेत्यस्मिन्नर्थे उपपत्तिर्मृग्येत्याह, अथ यस्मात्
खलु निश्चितं सर्वप्रत्यक्षमिति यावत्, प्राण एव प्रज्ञात्मा
क्रियाशक्त्युपाधिक एव ज्ञानशक्त्युपाधिको न त्वन्यः, इद प्रत्यक्षं
शरीरं देहं परिगृह्य अहं ममेति वा स्वीकृत्य उत्थापयति
शयनासनादिभ्य ऊर्द्धं नयति। इदानीं प्रसङ्गादुपासनान्तरं
श्रुत्यन्तरप्रसिद्धं प्राणे स्मारयति, तस्मात् यत इदं शरीरमुत्था-
पयति प्राणस्तत एतदेव उत्थापनहेतुभूतमेव न त्वन्यत्, उक्थं
उक्थशब्दाभिधेयमुपासीत व्याख्यातं। ननु यदि प्राण उक्थत्वे-
नोपास्यस्तर्हि पञ्चवृत्तिमात्रं विवक्षितं न परमात्मेत्यत
आह, यो वै प्राणो य एवात्र प्राणशब्दाभिधेयः सा प्रसिद्धा
प्रज्ञा सर्वबोधसाक्षिणी संवित् या वा यैव प्रज्ञा उक्ता स
प्रसिद्धः प्राणः प्राणोपाधिकः परमात्मा। ननु कस्मादेतदेक-
मेव तवोपाधिभूतमित्यत आह, सह मिलिता हि यस्मात्
एतौ प्रज्ञाप्राणौ अस्मिन् शरीरे स्पष्टं, वसतो निवासं कुरुतो
जीवने, सह मिलिता उत्क्रामतः अस्माच्छरीरादुत्क्रमणं कुरुतो

---

* यो वै प्राणः सा प्रज्ञा या वा प्रज्ञा स प्राणः सह ह्येतावस्मिञ्छ-
रीरे वसतः सहोत्क्रामतस्तस्यैषैव दृष्टिरिति टी॰ F. G.

प्राणस्तस्यैषैव दृष्टिरेतद्विज्ञानं यत्रैतत्पुरुषः सुप्तः स्वप्नं न कञ्चन पश्यत्यथास्मिन् प्राण एवैकधा भवति तदेनं वाक् सर्वैर्नामभिः सहाप्येति चक्षुः सर्वैः रूपैः सहा-

मरणे। पाठान्तर यो वै प्राणः सा प्रज्ञा या वा प्रज्ञा स प्राण इति। तस्य प्राणोपाधिकस्य एषैव इयमेव वक्ष्यमाणा दृष्टिः दर्शनापरपर्याया अवगतिः, अस्यामवस्थायां प्राणशब्दाभिधेयोऽवगन्तव्य इत्यर्थः। एषैव दृष्टिरिति व्याकरोति एतद्विज्ञानं यदेतत् सुषुप्तं तदेवात्मनः प्राणत्वविज्ञप्तिकारणं। एतच्छब्दार्थमाह, यत्र यस्यामवस्थायामेतत्सर्वविशेषबोधशून्य यथा तथा पुरुषो वस्तुतः परिपूर्णोऽपि पुरिशयः सुप्तः शयनमधिगतः स्वप्नं जाग्रद्वासनारूपं पदार्थजातं न कञ्चन पश्यति कमपि नावलोकयति अथ तदा स्वप्नानवलोकनकालेऽस्मिन्मुखनासिकासञ्चारिणि तिरस्कृतज्ञानशक्तौ प्राण एव क्रियाशक्तावेव न त्वन्यत्र एकधा भवति एकत्व गच्छति स्पष्ट, प्राणोपाधिकः प्राणशब्दार्हः पुरुषो भवतीत्यर्थः। ननु तदा वागादीनि करणानि क्व यान्तीत्यत आह, तत् तदास्मिन् प्राण एकधाभवनकाले एनं प्राणोपाधिकमात्मानं वाक्चक्षुःश्रोत्रमनांसि सविषयाणि लयं गच्छन्तीति पर्यायचतुष्टयेनाह, वाक् सर्वैर्नामभिः सहाप्येति चक्षुः सर्वैः रूपैः सहाप्येति श्रोत्रं सर्वैः शब्दैः सहाप्येति मनः सर्वैर्ध्यानैः सहाप्येति स्पष्टं। *ननु प्राणे लीनानां तेषां समुद्रे इव सरितां कुतः पुनरुत्पत्तिरित्यत आह, स प्राणोपाधिकः पुरुषो

* ननु प्राणेष्वपीतेषु कुत पुन उत्पत्तिरिति B

प्येति श्रोत्रं सर्वैः शब्दैः सहाप्येति मनः सर्वैर्ध्यानैः सहाप्येति स यदा प्रतिबुध्यते यथाग्नेर्ज्वलतः *सर्वा दिशो विष्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः† स एष प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति तस्मादेतदेवोक्थमुपासीतेति सैषा प्राणे

यदा यस्मिन् काले प्रतिबुध्यते जागरणं गच्छति जागरणावसरे एतस्मादुत्पत्तौ दृष्टान्तमाह, यथा दृष्टान्ते अग्नेर्जातवेदसो जाज्वल्यमानात् विस्फुलिङ्गाः क्षुद्रा अग्निकणा विप्रतिष्ठेरन् विविधासु दिक्षु निर्गच्छन्ति एवमेव अनेनैव प्रकारेण न त्वन्यथा एतस्मात्प्राणोपाधिकादात्मन आनन्दात्मनः प्राणा वागादयो यथायतनं यादृशं स्थानं जिह्वादि तदुद्दिश्य विप्रतिष्ठन्ते विविधं निर्गच्छन्ति, प्राणेभ्यो वागादिभ्यो देवा अग्न्यादयः, विप्रतिष्ठन्त इत्यनुवर्तते अत्र वक्ष्यमाणे च, देवेभ्योऽग्न्यादिभ्यो लोका नामादयो विषयाः। जीवतः प्राणोपाधिकत्वमुक्त्वा मरणेऽपि प्राणोपाधिकत्वमाह, तस्य प्राणोपाधिकस्य एषैव मरणावस्थारूपैव न त्वन्या सिद्धिः प्रसिद्धिः। प्राणत्वे एषैव सिद्धिरिति व्याकरोति, एतन्मरणं सर्वप्रत्यक्षं विज्ञानं विज्ञायतेऽनेनेति विज्ञानं प्रमाणमिति यावत्। एतच्छब्दोक्तं मरणमाह, यत्र यस्यामवस्थायां यदा वा एतत्पुरुषः अयं पुमान् प्रत्यक्षो मनुष्यत्वाद्यभिमानी आर्तो

* सर्वा दिशो F G टी० नास्ति ।

† स एष इत्यादि स प्राण इत्यन्तं F. G. टी० नास्ति ।

सर्वाणिन्द्रियाणि वै प्राणः सा प्रज्ञा या वा प्रज्ञा स प्राणस्त-स्यैषैव सिद्धिरेतद्विज्ञानं यत्रैतत्पुरुष आर्तो मरिष्यन्ना-बाल्यमेत्य सम्मोहमेति* तमाहुरुदक्रमीच्चित्तं न शृणो-ति न पश्यति न वाचा वदति न ध्यायति अथास्मिन् प्राण एवैकधा भवति तदेनं वाक् सर्वैर्नामभिः सहा-प्येति चक्षुः सर्वैः रूपैः सहाप्येति श्रोत्रं सर्वैः शब्दैः सहाप्येति मनः सर्वैः ध्यानैः सहाप्येति† ‡स यदा-

---

जराव्याध्यादिना प्रबलदुःख प्राप्तो मरिष्यन्मरणं करिष्यन् आसन्नमरण इत्यर्थः, आबल्यमबलस्य दुर्बलस्य भाव आबल्यं हस्तपादाद्यवशत्वमित्यर्थः, न्येत्य नितरामागत्य मोहं बन्ध्वाद्य-परिज्ञानलक्षणं न्येति नितरामागच्छति, तत् तदाहुः समीप-स्थाः कथयन्ति। समीपस्थोक्तिमाह, उदक्रमीत् उत्क्रमणमकरो-च्चित्तं मनः। चित्तोत्क्रमणे लिङ्गान्याहुः न शृणोति न पश्यति न वाचा वदति न ध्यायति स्पष्टं, इत्यनेन प्रकारेणाहुरित्यन्वयः। अथास्मिन् प्राण एवैकधा भवति तदेनं वाक् सर्वैः नामभिः सहाप्येति चक्षुः सर्वैः रूपैः सहाप्येति श्रोत्रं सर्वैः शब्दैः सहाप्येति मनः सर्वैर्ध्यानैः सहाप्येति स यदा प्रतिबुध्यते यथाग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन् एवमेवैतस्मादात्मनः

---

* आबल्य न्येत्य सम्मोह न्येति तदाहुरिति टी॰. F. G.

† स यदा प्रतिबुध्यते यथाग्नेर्विस्फुलिङ्गा इत्यादि देवेभ्यो लोका इत्यन्तं पूर्वपठितं टी॰ F G. पुस्तकेषु वर्तते, तदन्ते च ३ चिह्नं।

‡ स यदास्माच्छरीरादुत्क्रामति वागस्मात् सर्वाणि नामान्यभिवि-सृजत इति टी॰. F. G.

स्माच्छरीरादुत्क्रामति सहैवैतैः सर्वैरुत्क्रामति ॥ ३ ॥

वागेवास्मिन् सर्वाणि नामान्यभिविसृज्यन्ते वाचा सर्वाणि नामान्याप्नोति प्राण* एवास्मिन् सर्वे गन्धा अभिविसृज्यन्ते प्राणेन सर्वान् गन्धानाप्नोति चक्षु-

---

प्राणा यथायतन विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः। अथवा तदा तस्मिन् मरणकाले, प्रतिबुध्यते उत्पद्यते शरीरान्तरग्रहणं करोति, तस्मिन्नपि शरीरे मोहादिमुक्तो न भवतीत्यर्थः। व्याख्यातमन्यत् ॥ ३ ॥

एवं मरणकाले मूर्च्छायामिन्द्रियाणां लयमभिधाय शरीरादुत्क्रमणे तस्मिन्नेव लये विशेषमाह, स मुमूर्षुर्यदा यस्मिन् काले अस्मात्प्रत्यचात् शरीरात् शीर्णावयवात् देहादुत्क्रामति ऊर्ध्वं गच्छति तदा सहैवैतैः सर्वैरुत्क्रामति। वाक् वागिन्द्रियं, अस्मात् स्वामिनः, सर्वाणि निखिलानि नामानि स्वविषयभूतानि अभिविसृजते सर्वतः परित्यजति, विषयव्यापारात् सर्वथोपरमं प्राप्य प्रभोर्भोगं न प्रयच्छतीत्यर्थ.। ननु यदि वाङ्नामान्यभिविसृजते अस्मात्तर्ह्यन्येन तत्प्राप्तिरस्तु इत्यत आह, वाचा सर्वाणि नामान्याप्नोति स्पष्टं। अथवा नाम्नां परित्यागश्चेद्वाक् करोति तथा च स्वयं प्राणे विलीना स्वविषयरहिता स्यादित्यत आह, वाचेत्यादि। अयमर्थः, न वाङ्मात्रं प्रलीयते प्राणे किन्तु प्राणो वाचा सह सर्वाणि नामान्याप्नोति, वाङ्न स्वविषयरहिता प्राणे प्रलीयत इति। यथा वाक् तथा

---

* प्राणोऽस्मात् सर्वान् गन्धान् अभिविसृजत इति (प्राण इति टी०)

रेवास्मिन् सर्वाणि रूपाण्यभिविसृज्यन्ते चक्षुषा सर्वाणि रूपाण्याप्नोति श्रोत्रमेवास्मिन् सर्वे शब्दा अभिविसृज्यन्ते श्रोत्रेण सर्वाञ्छब्दानाप्नोति मन एवास्मिन् सर्वाणि ध्यानान्यभिविसृज्यन्ते मनसा सर्वाणि ध्यानान्याप्नोति *सह ह्येतावस्मिञ्छरीरे वसतः

घ्राणचक्षुःश्रोत्रमनांसीति पर्यायचतुष्टयेनाह, घ्राणोऽस्मात् सर्वान् गन्धानभिविसृजते, घ्राणेन सर्वान् गन्धानाप्नोति। चक्षुरस्मात्सर्वाणि रूपाण्यभिविसृजते, चक्षुषा सर्वाणि रूपाण्याप्नोति। श्रोत्रमस्मात्सर्वान् शब्दानभिविसृजते, श्रोत्रेण सर्वाञ्छब्दानाप्नोति। मनोऽस्मात्सर्वाणि ध्यानान्यभिविसृजते, मनसा सर्वाणि ध्यानान्याप्नोति। वाक्पर्यायवत् घ्राणचक्षुःश्रोत्रमनःपर्यायाः सविषयाः व्याख्येयाः। सा प्रसिद्धा एषा स यदेत्यादिनोक्ता, प्राणे प्राणोपाधिके परमात्मनि सर्वाप्तिः विषयेन्द्रियादिलक्षणस्य सर्वस्य प्राप्तिः। न चायं प्राणः पञ्चवृत्तिमात्र किन्तु क्रियाज्ञानशक्त्युपाधिक आत्मेत्येतदुक्तमर्थं स्मारयति, यो वै प्राणः सा प्रज्ञा या वा प्रज्ञा स प्राणः सह ह्येतावस्मिन् शरीरे वसतः सहोत्क्रामतः व्याख्यातं। ननु प्राणे सर्वेषां भूतानामेकीभाव उक्तो न तु प्रज्ञायां, तत्कथं प्राणप्रज्ञयोः सर्वात्मनैक्यमित्याशङ्क्य प्रज्ञाया अपि प्राणवत्सार्वात्म्यं वक्तुमाह, अथ प्राणस्य सार्वा-

* सैषा प्राणे सर्वाप्तिर्यो वै प्राणः सा प्रज्ञा या वा प्रज्ञा स प्राणः सह ह्येतावस्मिञ्छरीरे वसतः सहोत्क्रामतोऽथ खलु यथा प्रज्ञायां सर्वाणि भूतान्येकं भवन्ति तद्व्याख्यास्याम. । ४ । इति टी०. F G.

सहोत्क्रामतोऽथ यथास्यै प्रज्ञायै सर्वाणि भूतान्येकं भवन्ति तद्व्याख्यास्यामः ॥ ४ ॥

वागेवास्या एकमङ्गमुदूल्हं* तस्यै नाम परस्तात्प्रतिविहिता भूतमात्रा प्राण एवास्या एकमङ्गमुदूल्हं तस्य गन्धः परस्तात्प्रतिविहिता भूतमात्रा चक्षुरेवास्या एकमङ्गमुदूल्हं तस्य रूपं परस्तात्प्रतिविहिता

---

त्यकथनानन्तरं, खलु निश्चितं यथा एवमनेन प्रकारेण प्रज्ञायां ज्ञानशक्तौ चैतन्ये साक्षिणि सर्वाणि भूतानि निखिलानि वागादीनि सविषयाणि स्थिरजङ्गमशब्दाभिधेयानि एकं भवन्ति प्राणवदेकधा भवन्ति, तत् तथा व्याख्यास्यामः विस्पष्टमासमन्तात् कथयिष्यामः ॥ ४ ॥

एकं भावं प्रतिज्ञाय प्रथमतः प्रज्ञाया विभागमाह, तं वक्तुं वागेव वागिन्द्रियमेव प्रसिद्धं न त्वन्यत्, अस्याः प्रज्ञायाः एकमङ्गं एकं भागं गोरिवैकं स्तनं अदूढं अदूदुहत् स्वाधीनं कृतवतीत्यर्थः । तस्यै तस्याः दुग्धैकभागप्रज्ञायाः वाचः नाम वक्तव्य शब्दगत परस्तात् विषयत्वेन परस्मिन् बहिर्देशे प्रतिविहिता निर्मिता भूतमात्रा भूतभागः, मीयत इति मात्रा, तस्याः विषयत्वेन प्रतिविहिता भूतमात्रा नामेत्यन्वयः । यथा वाक् प्रज्ञायाः एकमङ्गमदूदुहत्, यथा च तस्याः परस्तात्प्र-

---

* उदूल्हमिति प्रायशः, अदूल्हमिति च क्वचित् A. उदूढमिति उदूढमिति च D. अदूढमिति F. टी०.

भूतमात्रा श्रोत्रमेवास्या एकमङ्गमुदूळ्हं तस्य शब्दः परस्तात्प्रतिविहिता भूतमात्रा जिह्वैवास्या एकमङ्गमुदूळ्हं तस्या अन्नरसः परस्तात्प्रतिविहिता भूतमात्रा हस्तावेवास्या एकमङ्गमुदूळ्हं तयोः कर्म परस्तात्प्रतिविहिता भूतमात्रा शरीरमेवास्या एकमङ्गमुदूळ्हं तस्य सुखदुःखे परस्तात्प्रतिविहिता भूतमात्रोपस्थ एवास्या एकमङ्गमुदूळ्हं तस्यानन्दो रतिः प्रजातिः परस्ता-

---

तिविहिता भूतमात्रा नाम एवं प्राणचक्षुःश्रोत्ररसनहस्तशरीरोपस्थपादबुद्धिस्थसंविद एकैकमङ्गमदूदुहन्, आसां यथाक्रमं परस्तात्प्रतिविहिताः भूतमात्राः गन्धरूपशब्दान्नरसकर्मसुखदुःखानन्दरतिप्रजातीत्याविज्ञातव्यकामा इति पर्यायनवकेनाह, प्राण एवास्या एकमङ्गमुदूढं तस्य गन्धः परस्तात्प्रतिविहिता भूतमात्रा, चक्षुरेवास्या एकमङ्गमदूढं तस्य रूपं परस्तात्प्रतिविहिता भूतमात्रा, श्रोत्रमेवास्या एकमङ्गमदूढ तस्य शब्दः परस्तात्प्रतिविहिता भूतमात्रा, जिह्वैवास्या एकमङ्गमदूढं तस्या अन्नरसः परस्तात्प्रतिविहिता भूतमात्रा, हस्तावेवास्या एकमङ्गमदूढं तयोः कर्म परस्तात्प्रतिविहिता भूतमात्रा, शरीरमेवास्या एकमङ्गमदूढं तस्य सुखदुःखे परस्तात्प्रतिविहिता भूतमात्रा, उपस्थ एवास्या एकमङ्गमदूढ तस्यानन्दो रतिः प्रजातिः परस्तात्प्रतिविहिता भूतमात्रा, पादावेवास्या एकमङ्गमदूढं तयोरित्याः परस्तात्प्रतिविहिता

त्प्रतिविहिता भूतमात्रा पादावेवास्या एकमङ्गमुदूल्हं तयोरित्याः परस्तात्प्रतिविहिता भूतमात्रा * मन एवास्या एकमङ्गमुदूल्हं तस्य धीः कामाः परस्तात्प्रतिविहिता भूतमात्रा ॥ ५ ॥

प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोति प्रज्ञया प्राणं समारुह्य प्राणेन सर्वान् गन्धानाप्नोति प्रज्ञया चक्षुः समारुह्य चक्षुषा सर्वाणि

---

भूतमात्रा, प्रज्ञैवास्या एकमङ्गमदूढं तस्यै धियो विज्ञातव्यं कामाः परस्तात्प्रतिविहिता भूतमात्रा। वाक्पर्यायवच्चक्षुरादिपर्यायाः नवापि व्याख्येयाः ॥ ५ ॥

एवं प्रज्ञाया विभागमुक्तेदानीमविभागमाह, प्रज्ञया वागुक्थयोक्तया संविदा वाच वागिन्द्रियं समारुह्य सम्यक् तादात्म्यलक्षणेन सम्बन्धेनारोहणं कृत्वा, अहं वागस्मीत्यभिमानं प्राप्येत्यर्थः, वाचा उक्तप्रज्ञाभिन्नेनोक्तेनेन्द्रियेण सर्वाणि निखिलानि नामानि वक्तव्यानि आप्नोति वाचाधिरूढा प्रज्ञा प्राप्नोति। अयमर्थः, न प्रज्ञामन्तरेणोक्तमिन्द्रियं नोक्तमिन्द्रियमन्तरेणोक्तविषयप्राप्तिः, ततो यद्यद्विना न भवति नोपलभ्यते वा तत्तदात्मकं, यथा तन्तून् विनाऽनुपलभ्यमानः पटस्तन्त्वात्मकः, यथा शुक्तिकामन्तरेण चानुपलभ्यमानं रजतं शुक्त्या-

---

* प्रज्ञैवास्या एकमङ्गमदूढ तस्यै धियो विज्ञातव्यं कामाः परस्तात्प्रतिविहिता भूतमात्रेति F. G. टी०.

रूपाण्याप्नोति प्रज्ञया श्रोत्रं समारुह्य श्रोत्रेण सर्वां-ञ्छब्दानाप्नोति प्रज्ञया जिह्वां समारुह्य जिह्वया सर्वानन्नरसानाप्नोति प्रज्ञया हस्तौ समारुह्य हस्ताभ्यां सर्वाणि कर्माण्याप्नोति प्रज्ञया शरीरं समारुह्य शरीरेण सुखदुःखे आप्नोति प्रज्ञयोपस्थं समारुह्यो-पस्थेनानन्दं रतिं प्रजातिमाप्नोति प्रज्ञया पादौ समा-रुह्य पादाभ्यां सर्वा इत्या आप्नोति *प्रज्ञया मनः

---

त्मकं, तथा चोक्तमिन्द्रियमन्तरेणाविद्यमानोऽनुपलभ्यमानो वि-षय उक्तेन्द्रियात्मकः, उक्तं चेन्द्रियं प्रज्ञामन्तरेणानुपलभ्यमानं प्रज्ञात्मकमिति। यथा वाङ्नामनी प्रज्ञया भेदरहिते एवं घ्राणगन्धौ चक्षूरूपे जिह्वान्नरसौ हस्तकर्माणि शरीरसुखदुः-खानि उपस्थानन्दरतिप्रजातयः पादगतयः प्रज्ञाधीविज्ञा-तव्यकामास्त्वेत्याह, प्रज्ञया प्राणं समारुह्य प्राणेन सर्वान् गन्धानाप्नोति, प्रज्ञया चक्षुः समारुह्य चक्षुषा सर्वाणि रूपा-ण्याप्नोति, प्रज्ञया श्रोत्रं समारुह्य श्रोत्रेण सर्वान् शब्दानाप्नोति, प्रज्ञया जिह्वां समारुह्य जिह्वया सर्वानन्नरसानाप्नोति, प्रज्ञया हस्तौ समारुह्य हस्ताभ्यां सर्वाणि कर्माण्याप्नोति, प्रज्ञया शरीरं समारुह्य शरीरेण सुखदुःखे आप्नोति, प्रज्ञयोपस्थं समारु-ह्योपस्थेनानन्दं रतिं प्रजातिमाप्नोति, प्रज्ञया पादौ समारुह्य

---

* प्रज्ञयैव धियं समारुह्य प्रज्ञयैव धियो विज्ञातव्यं कामाना-प्नोति। ६। इति F. G. टी०

समारुह्य मनसा सर्वाणि ध्यानान्याप्नोति ॥ ६ ॥

न हि प्रज्ञापेता वाङ्नाम किञ्चन प्रज्ञापयेदन्यत्र मे मनोऽभूदित्याह नाहमेतन्नाम प्राज्ञासिषमिति न हि प्रज्ञापेतः प्राणो गन्धं कञ्चन प्रज्ञापयेदन्यत्र मे मनोऽभूदित्याह नाहमेतं गन्धं प्राज्ञासिषमिति न

---

पादाभ्यां सर्वा इत्या आप्नोति, प्रज्ञयैव धियं समारुह्य प्रज्ञयैव धियो विज्ञातव्यं कामानाप्नोति। वाक्पर्यायवत्पर्यायनवकमपि व्याख्येयं ॥ ६ ॥

ननु किं प्रज्ञया यावता, वागादिभिरेव स्वः स्वोऽर्थोऽवगम्यते इत्याशङ्क्य वागादीनां प्रज्ञारहितानां सत्यपि स्वार्थसम्बन्धे तदवगमहेतुत्वं नेति सर्वजनीनानुभवेनाह। न हि प्रज्ञापेता वाङ्नाम किञ्चन प्रज्ञपयेत्। हि यस्मात् प्रज्ञारहितं वागिन्द्रियं किमपि वक्तव्यं स्वं परं वा नावगमयेत् प्रज्ञारहिता वाक् स्वव्यापारं न कुरुते, कुर्वत्यप्यविवक्षितार्थमसम्बद्धार्थं वा कुर्यादित्यर्थः। ननु प्रज्ञारहिता न प्रज्ञपयेदित्यस्मिन्नर्थे किं प्रमाणमित्याशङ्क्य सर्वजनीनमनुभवमभिनयेन प्रमाणयति, अन्यत्र विषयान्तरे मे ममेन्द्रियस्वामिनः मनः अन्तःकरणं धीवृत्तिजनकं प्रज्ञासाक्षि अभूत् अभवत् इत्याह एवं ब्रूते। मनसोऽन्यत्रावस्थाने किं स्यादित्यत आह, नाहमेतन्नाम प्राज्ञासिषमिति। अहमिन्द्रियस्वामी एतत् त्वया कथ्यमानं

हि प्रज्ञापेतं चक्षूरूपं किञ्चन प्रज्ञापयेदन्यत्र मे मनो ऽभूदित्याह नाहमेतद्रूपं प्राज्ञासिषमिति न हि प्रज्ञापेतं श्रोत्रं शब्दं कञ्चन प्रज्ञापयेदन्यत्र मे मनोऽभूदित्याह नाहमेतं शब्दं प्राज्ञासिषमिति न हि प्रज्ञापेता जिह्वान्नरसं कञ्चन प्रज्ञापयेदन्यत्र मे मनोऽभूदित्याह नाहमेतमन्नरसं प्राज्ञासिषमिति न हि प्रज्ञापेतौ हस्तौ कर्म किञ्चन प्रज्ञापयेयातामन्यत्र नौ* मनो ऽभूदित्याहतुर्नावामेतत्कर्म प्राज्ञासिष्व इति न हि प्र-

---

नाम वक्तव्यं वागिन्द्रियस्य विषयमित्यर्थः, न प्राज्ञासिषं न प्रकर्षेण ज्ञातवानहं, उक्तमनुक्तं वा, उक्तमपि विशदवर्णविव-चितार्थं तद्विपरीतं वेति, इति अनेन प्रकारेण आहेत्यनुषङ्गः। अयमर्थः, परज्ञानाज्ञानयोरप्रत्यक्षत्वेऽपि परस्य तद्वचनलिङ्गेनानुमातुं शक्यते। तथा च प्रज्ञारहितमुक्तमिन्द्रियं न स्वव्यापारक्षममिति। यथा वाक् तथा प्राणचक्षुःश्रोत्रजिह्वाहस्तशरीरोपस्थपादप्रज्ञा इति पर्यायनवकेनाह, न हि प्रज्ञापेतः प्राणो गन्धं कञ्चन प्रज्ञपयेदन्यत्र मे मनोऽभूदित्याह, नाहमेतं गन्धं प्राज्ञासिषमिति। न हि प्रज्ञापेतं चक्षूरूपं किञ्चन प्रज्ञपयेदन्यत्र मे मनोऽभूदित्याह, नाहमेतद्रूपं प्राज्ञासिषमिति। न हि प्रज्ञापेतं श्रोत्रं शब्दं कञ्चन प्रज्ञपयेदन्यत्र

---

* अन्यत्र मे मनोऽभूदित्याह नाहमेतत्कर्म प्राज्ञासिषमिति F. G. टी०.

ज्ञापेतं शरीरं *सुखं न दुःखं किञ्चन प्रज्ञापयेदन्यत्र मे मनोऽभूदित्याह †नाहमेतत्सुखं न दुःखं प्राज्ञासिषमिति न हि प्रज्ञापेत उपस्थ आनन्दं न रतिं न प्रजातिं काञ्चन प्रज्ञापयेदन्यत्र मे मनोऽभूदित्याह नाहमेतमानन्दं न रतिं न प्रजातिं प्राज्ञासिषमिति न हि प्रज्ञापेतौ पादावित्यां काञ्चन प्रज्ञापयेयातामन्यत्र ‡नौ मनोऽभूदित्याहतुर्नावामेतामित्यां प्राज्ञासिष्म

---

मे मनोऽभूदित्याह, नाहमेतं शब्दं प्राज्ञासिषमिति। न हि प्रज्ञापेता जिह्वान्नरसं कञ्चन प्रज्ञपयेदन्यत्र मे मनोऽभूदित्याह, नाहमेतमन्नरसं प्राज्ञासिषमिति। न हि प्रज्ञापेतौ हस्तौ कर्म किञ्चन प्रज्ञपयेयातामन्यत्र मे मनोऽभूदित्याह, नाहमेतत्कर्म प्राज्ञासिषमिति। न हि प्रज्ञापेतं शरीरं सुखं न दुःखं किञ्चन प्रज्ञपयेदन्यत्र मे मनोऽभूदित्याह, नाहमेतत् सुखं न दुःखं प्राज्ञासिषमिति। न हि प्रज्ञापेत उपस्थ आनन्दं न रतिं न प्रजातिं काञ्चन प्रज्ञपयेदन्यत्र मे मनोऽभूदित्याह, नाहमेतमानन्दं न रतिं न प्रजातिं प्राज्ञासिषमिति। न हि प्रज्ञापेतौ पादावित्यां काञ्चन प्रज्ञपयेयातामन्यत्र मे मनोऽभूदित्याह, नाहमेतामित्यां प्राज्ञासिषमिति। वाक्पर्यायवत्पर्यायाष्टकं व्याख्येयं। विज्ञातव्यकामयोर्बुद्धिमन्तरेणानुपलम्भस्य सर्वज-

---

* न सुखमिति D        † नाहमेतन्न सुखमिति D

‡ अन्यत्र मे मनोऽभूदित्यादि पूर्ववत् F. G. टी॰.

इति न हि प्रज्ञापेता धीः काचन सिध्येन्न प्रज्ञातव्य प्रज्ञायेत ॥ ७॥

न वाचं विजिज्ञासीत वक्तारं विद्यात् न गन्धं विजिज्ञासीत घ्रातारं विद्यान्न रूपं विजिज्ञासीत द्रष्टारं*

---

नीनत्वाद्धियमेवोररीकृत्याह, न हि प्रज्ञापेता धीः काचन सिध्येत् कापि विज्ञातव्यकामादिभेदभिन्नाकारान्तःकरणवृत्तिः, प्रज्ञापेताऽसाक्षिका न सिध्येत्, न प्रज्ञायते नावगम्यत इत्यर्थः। ननु मिथोऽपेक्षावतामिन्द्रियतद्विषयप्राणप्रज्ञानां तुल्यत्वात्कथं प्राणोपाधिका प्रज्ञैवोपास्येति नियम इत्याशङ्क्य प्रज्ञायामेवान्येषां कल्पितत्वमाह, न प्रज्ञातव्यं प्रज्ञायेत प्रज्ञातव्य धियो विषयस्वरूपं न प्रज्ञायेत नावगम्यते योग्यानुपलब्ध्या बुद्धेरभाव इत्यर्थः॥ ७॥

इन्द्रियैः सह प्रज्ञाया अभेदश्चेत् तर्हि तं मामायुरमृतमित्युपास्वेत्यत्र वाचनिकया रीत्या वागेवोपास्या स्यादित्यत आह, न वाचं विजिज्ञासीत वाचं वागिन्द्रियं उपास्येत्येवं न विजिज्ञासीत न विचारयेन्नावगच्छेदित्यर्थः। तर्हि किमवगम्यमित्यत आह, वक्तारं वागिन्द्रियप्रेरकमानन्दात्मानं सर्वकरणवृत्तिसाक्षिणमित्यर्थः, विद्यात् प्राणोऽस्मि प्रज्ञात्मा वक्तायुरमृतमित्यवगच्छेत्। अथवा प्राणोऽस्मि प्रज्ञात्मा वक्तेत्येवावगच्छेत्, अत्रैवायुरमृतयोरन्तर्भावात्। अतएव प्राण-

---

* रूपविद्यमिति F G टी०.

विद्यान्न शब्दं विजिज्ञासीत श्रोतारं विद्यान्नान्नरसं विजिज्ञासीतान्नरसस्य विज्ञातारं विद्यान्न कर्म विजिज्ञासीत कर्तारं विद्यान्न सुखदुःखे विजिज्ञासीत सुख-

---

प्रश्ने सर्वव्यापिन्यावङ्गीकृत्य मह प्रोतावित्याद्युक्तं, *पूर्वं न वाचं विजिज्ञासीतेति करणनिषेधः कृतः, अन्ते च न मनो विजिज्ञासीतेति तस्यैव निषेधं करिष्यति, तेनाद्यन्ताभ्यामिन्द्रियनिषेधः सर्वेन्द्रियोपलक्षणार्थं, मध्ये पर्यायाष्टकेन विषयं निषेधति पूर्वोत्तरयोरपि विषयनिषेधोपलक्षणार्थं। न चात्रानेकश इन्द्रियप्राये शरीरस्य पाठाच्छरीरमपीन्द्रियमिति मन्तव्यं, करणत्वस्य विषयोपलब्धौ विवक्षितत्वात् तस्य च भोगायतनेऽपि शरीरे यथाकथञ्चिदपि सम्पादयितुं सुशकत्वात्। अथैवमपि प्रायपाठस्याग्रहः। तर्हि शरीरशब्देन त्वगिन्द्रियमस्तु। न चैवं सुखदुःखयोर्विषयत्वं विरुध्यते, ताभ्यामुपलक्षितस्य तज्जनकस्य स्पर्शस्यैव कल्पयितुं शक्यत्वात्, एवञ्च कल्पनागौरवेऽपि प्रायपाठो न बाधितो भवति। पर्यायाष्टकविषयं निषिध्य तत्तद्विषयिण एवावगम्यत्वमाह, न गन्धं विजिज्ञासीत घ्रातारं विद्यात्, न रूपं विजिज्ञासीत रूपविदं विद्यात्, न शब्दं विजिज्ञासीत श्रोतारं विद्यात्, नान्नरसं विजिज्ञासीतान्नरसस्य विज्ञातारं विद्यात्, न कर्म विजिज्ञासीत कर्त्तारं विद्यात्, न

---

* अथ वागादिभ्यः प्राणो मुख्य इति प्राणे ब्रह्मामृतत्वोपासनं समर्पितं, अधुना वक्तर्यात्मनि प्राणस्यापि प्राणे ब्रह्मामृतत्वबुद्धिरुपदिश्यते इति रहस्यमिति अधिकः पाठः D.

दुःखयोर्विज्ञातारं विद्यान्नानन्दं न रतिं न प्रजातिं* विजिज्ञासीतानन्दस्य रतेः प्रजातेर्विज्ञातारं विद्यान्नेत्यां विजिज्ञासीतैतारं विद्यान्न मनो विजिज्ञासीत मन्तारं विद्यात्ता वा एता दशैव भूतमात्रा अधिप्रज्ञं दश प्रज्ञामात्रा अधिभूतं यद्धि भूतमात्रा न स्युर्न

---

सुखदुःखे विजिज्ञासीत सुखदुःखयोर्विज्ञातारं विद्यात्, नानन्दं न रतिं न प्रजाति विजिज्ञासीतानन्दस्य रतेः प्रजातेर्विज्ञातारं विद्यात्, नेत्यां विजिज्ञासीतैतारं विद्यात्। रूपविद्यं रूपविदं, एतारं गन्तारं। स्पष्टमन्यत्। आदाविन्द्रियं निषिध्येन्द्रियस्वामिनो यथा ज्ञातव्यत्वमुक्तं तथान्तेऽप्याह, न मनो विजिज्ञासीत मन्तारं विद्यात्। वाक्पर्यायवद्व्याख्येयं। एवं सर्वेन्द्रियविषयसाक्षिणो ज्ञानमभिधाय प्रसङ्गात्सर्वानर्थमूलं संसारचक्रमिन्द्रियविषयाभ्यामितरेतरसापेक्षाभ्यां प्रवर्तते, अन्यतराभावे च न प्रवर्तत इत्यभिप्रायवानाह। ताः प्रकृताः संसारचक्रस्य मूलभूताः, वै प्रसिद्धाः एताः प्रत्यक्षा अनुमेयाश्च, दशैव दशसङ्ख्याका एव न त्वधिकाः, शरीरे त्वचः सुखदुःखयोः स्पर्शस्य चान्तर्भावेन मनसश्च सर्वेन्द्रियेषु मन्तव्यस्य च सर्वेषु विषयेषु, भूतमात्राः वक्तव्याद्या विषयाः, अधिप्रज्ञं प्रज्ञाभिन्नानीन्द्रियाण्यधिकृत्य वर्तन्त इति अधिप्रज्ञं।

---

* प्रजापतिमिति क्वचित् पठ्यते।

**प्रज्ञामात्राः स्युर्यद्वा प्रज्ञामात्रा न स्युर्न भूतमात्राः स्युर्न ह्यन्यतरतो रूपं किञ्चन सिध्येन्नो एतन्नाना तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता**

---

दश दशसङ्ख्याकाः प्रज्ञामात्राः वागादीनीन्द्रियाणि अधिभूतं भूतमात्रा वक्तव्याद्यानि भूतानि तानि विषयत्वेनाधिकृत्य वर्तन्त इत्यधिभूतं। यत् यदि, हि प्रसिद्धाः, भूतमात्राः नामादिरूपाः, स्युः नेति वहिरेवावगन्तव्यं*, न भवेयुः न प्रज्ञामात्राः स्युः, उक्तानीन्द्रियाणि न भवेयुः, न हि निर्विषयमिन्द्रियं भवति, यत् यदि वा पक्षान्तरे प्रज्ञामात्राः उक्तानीन्द्रियाणि न स्युः न भवेयुः न भूतमात्राः स्युः उक्ता भूतमात्रा न भवेयुः। तत्र हेतुमाह, न ह्यन्यतरतो रूप किञ्चन सिध्येत्। अन्यतरतः एकस्मात् प्रज्ञामात्राभूतमात्रयोर्मध्ये हि यस्मात् किमपि विषय इन्द्रियं वा न सिध्येत्। अयमर्थः। न हि विषयो विषयेणेन्द्रियं वेन्द्रियेणावगम्यते, किन्तर्हि इन्द्रियेण विषयो विषयेणेन्द्रियमिति। ननु यदि विषयेन्द्रियमितरेतरसापेक्षं तर्ह्यस्य परस्परं विभिन्नत्वात् प्रज्ञाया अप्येतन्निमित्तो विभेदः स्यात्, तथा च यथा प्रज्ञायां सर्वाणि भूतान्येकं भवन्तीति प्रतिज्ञा व्याहता स्यादित्यत आह, नो एतन्नाना एतत् प्रज्ञामात्राभूतमात्रारूपं नो नाना न भेदवत्। नानात्वाभावं प्रतिज्ञाय तदुपपादयितुं दृष्टा-

---

* एतावता नेति मूले नास्तीदिति प्रतीयते।

एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः स एष प्राण एव प्रज्ञात्मानन्दो*ऽजरोऽमृतो न साधुना कर्मणा भूयान् †भवति नो एवा-

न्तमाह, तत् तत्र यथा दृष्टान्ते रथस्य रथचक्रस्य अरेषु नाभिप्रतिष्ठितेषु तीक्ष्णाग्रेषु काष्ठेषु नेमिः अरेभ्यो बहिर्देशवर्ति वर्तुलं काष्ठं अर्पितः, अर्पिता अराधारा वर्तन्त इत्यर्थः। नाभौ अन्तःकाष्ठे अराधारच्छिद्रवति वर्तुले, अराः दीर्घाणि तीक्ष्णानि काष्ठानि, अर्पिताः प्रतिष्ठिताः, एवमेव तद्वदेव न त्वन्यथा, एताः उपलभ्यमानाः भूतमात्राः विषयाः नेमिस्थानीयाः प्रज्ञामात्रासु इन्द्रियेषु अरस्थानीयेषु अर्पिताः प्रतिष्ठिताः, प्रज्ञामात्राः इन्द्रियाण्यरभूतानि प्राणे मुखनासिकासञ्चारिणि नाभिस्थानीये अर्पिताः प्रतिष्ठिताः। स प्राणोपाधिकः, एषः प्रज्ञात्मकधीवृत्तौ प्रतिफलितः, प्राज्ञः प्रज्ञया नित्यया स्वयप्रकाशया युक्तः, आत्मा अस्मत्प्रत्ययव्यवहारयोग्यः, आनन्दः सुखैकस्वभावः, अजरः जरारहितः, अमृतः मरणरहितः स्वयंप्रकाशविज्ञानानन्दात्मस्वरूपः सर्वविक्रियाशून्य इत्यर्थः। नन्वेवंरूपस्यापि साध्वसाधुकर्मभ्यामाधिक्यन्यूनत्वे स्यातां समुद्रस्येवेन्दूदयास्तमयाभ्यामित्यत आह, न साधुना कर्मणा भूयान् साधुना शा-

---

* प्रज्ञात्मानन्त इति D. † भवतीति F. G. टी॰ नास्ति।

साधुना कनीयानेष* ह्येव साधु कर्म कारयति तं य-
मेभ्यो लोकेभ्य उन्निनीषत एष उ एवासाधु कर्म का-

स्त्रविहितेन कर्मणा पुण्यरूपेण न भूयान् नाधिको भवतीति शेषः । नो एव नैव असाधुना शास्त्रप्रतिषिद्धेन कर्मणा कनीयान् कनिष्ठो न्यून इत्यर्थः, भवतीति शेषः । अयमर्थः । विक्रियावतो ह्यतिशयो दृष्टः समुद्रादेः, न तु विपरीतस्य गगने तद्दर्शनादिति । साध्वसाधुकर्मणी एनं न स्पृशत इत्यस्मिन्नर्थे हेतुमाह, एष ह्येव हि यस्मादेष एव प्राण प्रज्ञोपाधिकः एव नलन्यः, एन शरीराद्यात्मत्वाभिमानिनं साधु कर्म शास्त्रविहितं कर्म धर्मरूपं कारयति अनिच्छन्तमपि अनुष्ठापयति, भूतमिव कस्यचिच्छरीर आविष्टं स्वयं निर्व्यापारं सत् शरीराभिमानिनं विविधान् व्यापारान् कारयति, तं एनं प्रकृतं वक्ष्यमाणं यं प्रसिद्धं स्वर्गार्थिनं अन्वानुनेषति आत्मानमनु पश्चादासमन्तात् नुनेषति निनीषते ऊर्द्ध्वं नेतुमिच्छतीत्यर्थः । एष उ एव अपि उक्त एव नलन्य', एनं शरीराद्यभिमानिनं असाधु कर्म शास्त्रनिषिद्धं कर्म पातकरूपं कारयति अनिच्छन्तमप्यनुष्ठापयति तं प्रियसुखमनर्थार्थिनं यं प्रसिद्धं पातकिनं एभ्यः प्रत्यक्षेभ्यः लोकेभ्यः मनुष्यादिनिवासेभ्यः नुनुत्सते निनीषते

* एष ह्येवैनं साधु कर्म कारयति तं यमन्वानुनेषत्येष उ एवैनमसाधु कर्म कारयति त यमेभ्यो लोकेभ्यो नुनुत्सत एष लोकपाल एष लोकाधिपतिरेष सर्वेश स म आत्मेति विद्यादिति F G. टी० ।

रयति तं यमधो निनीषत एष लोकपाल एष लोकाधिपतिरेष लोकेशः स म आत्मेति विद्यात् स म आत्मेति विद्यात् ॥ ८ ॥

इत्यारण्यके कौषीतकिब्राह्मणोपनिषदि तृतीयोऽध्यायः समाप्तः ॥ * ॥

---

अधो नेतुमिच्छतीत्यर्थः । साध्वसाधुकर्मकारयितृत्वं स्वर्गनरकनयनार्थमित्युक्तं तदस्य प्रभुत्वादुपपन्नमित्याह, एषः स्वर्गनरकयोर्नेता लोकपालः लोकानां साधूनां सुखेनासाधूनां दुःखेन च पालको रक्षको लोकपालः । तथा च लोकपालत्वं मन्व्यादिवत्स्यादित्यत आह, एषः उक्तः लोकाधिपतिः लोकानां साधूनामसाधूनां चाधिष्ठाय पालयिता महाराजवल्लोकाधिपतिः। तथापि महाराजवत् कांश्चिदेव लोकान् प्रत्यधिपतित्वं स्यादित्यत आह, एष उक्तः सर्वेशः सर्वस्य निखिलस्य भूतभौतिकस्येशो नियन्ता सर्वेशः। स उक्तः सर्वेशत्वादिगुणः मे ममेन्द्रस्य वक्तुः आत्मा अस्मत्प्रत्ययव्यवहारयोग्यो मामेव विजानीहीति मयोक्तः इति विद्यात् एवं जानीयात् स म आत्मेति विद्यात् व्याख्यातं । वाक्याभ्यासोऽध्यायपरिसमाप्त्यर्थः ॥ ८ ॥

इति श्रीशङ्करानन्दभगवतः कृतौ कौषीतकिब्राह्मणोपनिषद्दीपिकायां तृतीयोऽध्यायः ॥ * ॥

*अथ ह वै गार्ग्यो बालाकिरनूचानः संस्पष्ट† आस सोऽवसदुशीनरेषु सवसन्मत्स्येषु कुरुपञ्चालेषु काशि-

---

पूर्वाध्याये प्राणोपाधिक आत्मोक्तस्तत्र च भवति कस्यचिद्बुद्धिभ्रमः प्राण एव चैतन्यविशिष्ट आनन्दादिगुणकः आत्मेति, तद्भ्रमनिवारणार्थं प्राणात् सुषुप्तावस्थादपगतचैतन्यात्परं चेतनमानन्दात्मानं विवक्षुः पूर्वोत्तरपक्षाभ्यां ब्रह्मविद्याया अमानित्वादिगुणमन्तरेणानर्हतेति दुर्लभत्वं दर्शयितुमाख्यायिकामाह, गार्ग्यः गर्गगोत्रीयः एतन्नामा वा ह किल वै प्रसिद्धो छष्टत्वेन श्रुत्यन्तरे बालाकिः बलाकस्यापत्यं अनूचानः अनु आचार्यं वदन्तमनु स्वयमप्युच्चारयतीत्यनूचानः अधीतवेद इत्यर्थः । संस्पष्टः सम्यक्स्पष्टः सर्वत्र प्रथितकीर्तिरित्यर्थः, आस बभूव । सः प्रकृतो गार्ग्यः अवसत् निवासमकरोत्, उशीनरेषु उशीनरसञ्ज्ञकेषु देशेषु सवसन् सञ्चरन् स्वकीर्तिकामः सर्वत्र पर्यटन्नित्यर्थः । मत्स्येषु मत्स्यसञ्ज्ञकेषु देशेषु, अवसदिति अत्र वक्ष्यमाणयुग्मद्वये चानुवर्तते, कुरुपञ्चालेषु कुरुसञ्ज्ञकेषु पञ्चालसञ्ज्ञकेषु च कुरुपञ्चालेषु, काशिविदेहेषु काश्युपलक्षितेषु विदेहसञ्ज्ञकेषु च काशिविदेहेषु, इति एवं प्रकारेष्वन्येष्वपि त्रैवर्णिकनिवासदेशेष्ववसदित्यर्थः । स नानादेशवासी प्रथितकीर्तिर्गर्वाढ्यो गार्ग्यः ह किल

---

* गार्ग्यो ह वै बालाकिरिति F. G टी० ।　† संस्पृष्ट इति A.

विदेहेष्विति स हाजातशत्रुं *काश्यमाव्रज्योवाच ब्रह्म ते ब्रवाणीति तं होवाचाजातशत्रुः सहस्रं †दद्म

---

अजातशत्रुं न विद्यते जात उत्पन्नो यदपेक्षया शत्रुः सोऽयं सार्थनामधारी सर्वत्र समबुद्धिः अजातशत्रुः, तं काश्यं काशीदेशाधिपतिं एत्य कदाचित् समीपं प्राप्य उवाच उक्तवान्। गार्ग्योक्तिमाह, ब्रह्म अनुपचरितब्रह्मशब्दाभिधेयं ते तुभ्यमजातशत्रवे ब्रवाणि, यदि भवतोऽनुज्ञा तदा वदानि, इति अनेन प्रकारेण उवाचेत्यन्वयः। तं एवं वदन्तं गार्ग्यं ह किल उवाच उक्तवान् अजातशत्रुः अजातशत्रुनामा राजा। अजातशत्रूक्तिमाह, सहस्रं गवां सहस्रं दद्मः वयं राजानोऽल्पेऽपि कार्ये प्रभूतं प्रयच्छामः किमुतास्मिन्नर्थे त्वादृशानामित्यर्थः, ते तुभ्यं ब्राह्मणाय ब्रह्मविदे दानपात्राय। नेयं ब्रह्मविद्यायाः दक्षिणा किन्तु एतस्यां इदानीमुक्तायां वाचि ब्रह्म ते ब्रवाणीत्येवरूपवाङ्मात्रनिमित्त। जनकः जनकनामा मिथिलेश्वरोऽत्र ब्रह्मविद्यायाः सधनाया दाता जनकः स एव ब्रह्मविद्यायाः प्रतिग्रहीता, इत्यनेन प्रकारेण मामज्ञात्वा, वै प्रसिद्धाः उ अपि जनाः त्रैवर्णिकाः व्यर्थं धावन्ति गच्छन्ति। अयमर्थः। ब्रह्मविद्यायाः सोपायायाः दाता वक्ता च पितेत्येवं वदन्तो जना मिथिलेश्वरमेव गच्छन्ति, अपि मां

---

* काश्यमेत्योवाचेति F G टी०।

† दद्मि व इतीति D दद्म (दद्मः इति टी०) व एतस्यामिति F. G टी०।

इत्येतस्यां वाचि जनको जनक इति वा उ जना धावन्तीति ॥ १ ॥

*आदित्ये बृहच्चन्द्रमस्यन्नं विद्युति सत्यं स्तनयित्नौ शब्दो वायाविन्द्रो वैकुण्ठ आकाशे पूर्णमग्नौ विषा-

---

तादृशं ततोऽप्यभ्यधिकं वा न जानन्ति, इत्यनेन प्रकारेणोवाचेत्यन्वयः ॥ १ ॥

सः उक्तः ह किल उवाच उक्तवान् बालाकिः बलाकस्यापत्यं, य एव प्रसिद्ध एव न लन्य', एषः मादृशस्य प्रत्यक्षः, आदित्ये आदित्यमण्डले पुरुषः पुरुषाकारश्चेतनः तमेव उक्तस्थानस्थमेव न लन्यं, अहं गार्ग्यो ब्रह्मवित् उपासे विजातीयप्रत्ययशून्येन सजातीयप्रत्ययप्रवाहेण ब्रह्मेति साक्षात्कुर्वे, इति अनेन प्रकारेणोवाचेत्यन्वयः। तं एवं ब्रुवाणं गार्ग्यं, ह किल, उवाच उक्तवान् अजातशत्रुः एतन्नामा, हस्तसञ्ज्ञया निवारयन्, मा मा आबाधायां द्विर्वचनं माङः, एतस्मिन् उक्तपुरुषे उक्तपुरुषोपदेशनिमित्तमित्यर्थः, आवयोर्ज्ञाने समाने सति समवादयिष्ठाः त्वं गुरुरहं शिष्य इति गुरुशिष्योक्तिरूपं संवादं मा कारय, एतस्मिन् कार्यमाणे वयं बाधिताः स्याम। ननु यद्यपि त्वं जानीषे एतं पुरुषं तथापि तद्गुणानुपासनाफलञ्च न जानीष इत्यत आह। बृहन् अभ्यधिकः पाण्डरवासाः शुक्लगुणोदकवस्त्रः, चन्द्रमसः सूर्यसु-

---

* आदित्य इत्यादि सत्यस्येत्यन्तं F. G. टी० नास्ति ।

सह्रिरित्यप्सु तेज इत्यधिदैवतमथाध्यात्ममादर्शे प्रति-
रूपश्छायायां द्वितीयः प्रतिश्रुत्कायामसुरिति शब्दे

---

सुषुम्नानाडीरूपत्वादेतौ शाखान्तरे सोमगुणौ सूर्येऽप्यविरुद्धौ,
*अतिष्ठाः सर्वाणि भूतान्यतीत्य तिष्ठतीत्यतिष्ठाः, सर्वेषां
भूतानां निखिलानां स्थिरजङ्गमानां मूर्द्धा मस्तकं, इति
अनेन प्रकारेण, वै प्रसिद्धः सर्वेषां ब्रह्मविदां निरभिमा-
निनां अहं अजातशत्रुः एतं त्वयोक्तं पुरुष उपासे उपासनया
साक्षात्कुर्वे, इति उक्तपुरुषगुणसमाप्त्यर्थः। सः प्रकृतः यः प्र-
सिद्धः उपासकः, ह किल, एतं उक्तगुणकं पुरुषं एवमुपास्ते
उक्तगुणोपासनया साक्षात्कुरुते, सः अतिष्ठाः सर्वेषां भूतानां
मूर्द्धा व्याख्यातं भवति स्पष्टं, यद्गुणं ब्रह्मोपास्ते स्वयमपि त-
द्गुणो भवति ॥ २ ॥

स होवाच बालाकिर्य एवैष चन्द्रमसि पुरुषस्तमेवाह-
मुपास इति। तं होवाचाजातशत्रुर्मा मैतस्मिन् समवादयिष्ठाः
सोमो राजान्नस्यात्मेति वा अहमेतमुपास इति स यो हैत-
मेवमुपास्तेऽन्नस्यात्मा भवति ॥ ३ ॥ स होवाच बालाकिर्य एवैष
विद्युति पुरुषस्तमेवाहमुपास इति। तं होवाचाजातशत्रुर्मा
मैतस्मिन् समवादयिष्ठास्तेजस्यात्मेति वा अहमेतमुपास इति
स यो हैतमेवमुपास्ते तेजस्यात्मा भवति ॥ ४ ॥ स होवाच
बालाकिर्य एवैष स्तनयित्नौ पुरुषस्तमेवाहमुपास इति। त

---

* तिष्ठाः अतिष्ठा इति B. C. E.

मृत्युः स्वप्ने यमः शरीरे प्रजापतिर्दक्षिणेऽक्षिणि वाचः सव्येऽक्षिणि सत्यस्य ॥ २ ॥

---

होवाचाजातशत्रुर्मा मैतस्मिन् समवादयिष्ठाः शब्दस्यात्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते शब्दस्यात्मा भवति ॥ ५ ॥ स होवाच बालाकिर्य एवैष आकाशे पुरुषस्तमेवाहमुपास इति। तं होवाचाजातशत्रुर्मा मैतस्मिन् समवादयिष्ठाः पूर्णमप्रवर्ति ब्रह्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते पूर्यते प्रजया पशुभिर्नो एव स्वयं नास्य प्रजा पुराकालात्प्रवर्तते ॥ ६ ॥ स होवाच बालाकिर्य एवैष वायौ पुरुषस्तमेवाहमुपास इति। तं होवाचाजातशत्रुर्मा मैतस्मिन् समवादयिष्ठा इन्द्रो वैकुण्ठोऽपराजिता सेनेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते जिष्णुर्हि *वाऽपराजयिष्णुरन्यतस्त्यजायी भवति ॥ ७ ॥ स होवाच बालाकिर्य एवैषोऽग्नौ पुरुषस्तमेवाहमुपास इति। तं होवाचाजातशत्रुर्मा मैतस्मिन् समवादयिष्ठा विषासहिरिति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते विषासहिर्हैवान्येष भवति ॥ ८ ॥ स होवाच बालाकिर्य एवैषोऽप्सु पुरुषस्तमेवाहमुपास इति। तं होवाचाजातशत्रुर्मा मैतस्मिन् समवादयिष्ठा नाम्नस्यात्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते नाम्नस्यात्मा भवतीत्यधिदैवतमथाध्यात्मं ॥ ९ ॥ स होवाच

---

* वाऽपराजिष्णुरिति F G.

स होवाच *बालाकिर्य एवैष आदित्ये पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा †मैतस्मिन्

बालाकिर्य एवैष आदर्शे पुरुषस्तमेवाहमुपास इति। तं होवाचाजातशत्रुर्मा मैतस्मिन् समवादयिष्ठाः प्रतिरूप इति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते प्रतिरूपो हैवास्य प्रजायां पुत्र आजायते नाप्रतिरूपः॥ १०॥ स होवाच बालाकिर्य एवैष प्रतिश्रुत्कायां पुरुषस्तमेवाहमुपास इति। तं होवाचाजातशत्रुर्मा मैतस्मिन् समवादयिष्ठा द्वितीयोऽनपग इति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते विन्दते द्वितीयान् ‡द्वितीयवान् भवति॥ ११॥ स होवाच बालाकिर्य एवैष शब्दः पुरुषमन्वेति तमेवाहमुपास इति। तं होवाचाजातशत्रुर्मा मैतस्मिन् समवादयिष्ठा असुरिति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते नो एव स्वयं नास्य प्रजा पुरा कालात् सम्मोहमेति॥ १२॥ स होवाच बालाकिर्य एवैष छायापुरुषस्तमेवाहमुपास इति। तं होवाचाजातशत्रुर्मा मैतस्मिन् समवादयिष्ठा मृत्युरिति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते नो एव स्वयं नास्य प्रजा पुरा कालात्प्रमीयते॥ १३॥ स होवाच बालाकिर्य एवैष शारीरः पुरुषस्तमेवाहमुपास इति। तं होवाचाजातशत्रुर्मा मैतस्मिन्

* वालाकिरित्यनेकत्र पाठान्तरं। † मैतस्मिन् समवादयिष्ठा बृहन् पाण्डरवासा अतिष्ठा इति F. G टी॰ (वासातिष्ठा इति F)।
‡ द्वितीयादिति टी॰।

संवादयिष्ठा बृहत्पाण्डुरवासा अतिष्ठाः सर्वेषां भूतानां मूर्द्धेति वा अहमेतमुपास इति स यो हैतमेवमुपास्तेऽतिष्ठाः सर्वेषां भूतानां मूर्द्धा भवति ॥ ३ ॥

---

समवादयिष्ठाः प्रजापतिरिति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते प्रजायते प्रजया पशुभिः ॥ १४ ॥ स होवाच बालाकिर्य एवैष प्राज्ञ आत्मा येनैतत्सुप्तः* स्वप्नया चरति तमेवाहमुपास इति। तं होवाचाजातशत्रुर्मा मैतस्मिन् समवादयिष्ठाः यमो राजेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते सर्वं हैवास्मा इदं श्रैष्ठ्याय यम्यते ॥ १५ ॥ स होवाच बालाकीर्य एवैष दक्षिणेऽक्षन् पुरुषस्तमेवाहमुपास इति। तं होवाचाजातशत्रुर्मा मैतस्मिन् समवादयिष्ठा नाम्न आत्मा अग्नेरात्मा ज्योतिष आत्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्त एतेषां सर्वेषामात्मा भवति ॥१६॥ स होवाच बालाकिर्य एवैष सव्येऽक्षन् पुरुषस्तमेवाहमुपास इति। तं होवाचाजातशत्रुर्मा मैतस्मिन् समवादयिष्ठाः सत्यस्यात्मा विद्युत आत्मा तेजस आत्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्त एतेषामात्मा भवतीति ॥ १७ ॥

चन्द्रमसि चन्द्रमण्डले, सोमो राजा प्रियदर्शनो दीप्तिमान्। अन्नस्यात्मा चतुर्विधस्यादनीयस्यात्मा कारणं स्वरूपं वा फलहेतुः तत्स्वरूपस्तद्वान् भवतीति वा व्याख्येयं॥ ३ ॥

---

* सुप्तमिति F.

स होवाच बालाकिर्य एवैष चन्द्रमसि पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन् संवादयिष्ठा अन्नस्यात्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्तेऽन्नस्यात्मा भवति ॥ ४ ॥

स होवाच बालाकिर्य एवैष विद्युति पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन् संवादयिष्ठाः सत्यस्यात्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते सत्यस्यात्मा भवति ॥ ५ ॥

स होवाच बालाकिर्य एवैष स्तनयित्नौ पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन् संवादयिष्ठाः शब्दस्यात्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते शब्दस्यात्मा भवति ॥ ६ ॥

---

विद्युति सौदामिनीमण्डले, तेजस्यात्मा तेजसः कारणं स्वरूप वा ॥ ४ ॥ स्तनयित्नौ मेघमण्डले, शब्दस्यात्मा ध्वनिवर्णादिभेदभिन्नस्य शब्दस्य कारणं स्वरूपं वा ॥ ५ ॥ आकाशे गगने ऽव्याकृते वा, पूर्णं परिपूर्णं, अप्रवर्ति क्रियाशून्यं, ब्रह्म बृहत् सर्वस्मादभ्यधिकं, पूर्यते प्रजया पशुभिः, पूर्णगुणोपासनफलं पुत्रगवादिपरिपूर्तिः। अप्रवर्तिगुणोपासनफलमाह, नो एव स्वयं नास्य प्रजा पुरा कालात् प्रवर्तते, शतसंवत्सरात्कालात्पूर्वं

स होवाच बालाकिर्य एवैष वायौ पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन् संवादयिष्ठा इन्द्रो वैकुण्ठोऽपराजिता सेनेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते जिष्णुर्ह वा अपराजयिष्णुरन्यतस्त्यजायी भवति ॥ ७ ॥

स होवाच बालाकिर्य एवैष आकाशे पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन् संवादयिष्ठाः पूर्णमप्रवर्त्ति ब्रह्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते पूर्यते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ॥ ८ ॥

---

स्वयमुपासकः नो एव नैव प्रवर्तते प्रमीयते, अस्योपासकस्य प्रजा पुत्रादिका पुरा कालात्प्रवर्तत इत्यनुवर्तते ॥ ६ ॥ वायौ पवने, इन्द्रः परमैश्वर्यसम्पन्नः, वैकुण्ठः विगता कुण्ठा परेण निवारणा यस्मात्स विकुण्ठः, विकुण्ठ एव वैकुण्ठः, अपराजिता सेना न परैः पराजिता सेना अपराजिता सेना। इन्द्रगुणफलमाह, जिष्णुर्हि वा जयनशीलः हि प्रसिद्धौ वाशब्दः एवकारार्थः। वैकुण्ठगुणफलमाह, अपराजयिष्णुः अपराजिष्णुः परैर्जेतुमशक्यशीलः। अपराजितसेनागुणफलमाह, अन्यतस्त्यजायी अन्यतो भवोऽन्यतस्त्यो वैरी तज्जयलक्षणं

स होवाच बालाकिर्य एवैषोऽग्नौ पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन् संवादयिष्ठा विषासहिरिति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते विषासहिर्ह वा अन्येषु भवति ॥ ९ ॥

स होवाच बालाकिर्य एवैषोऽप्सु पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन् संवादयिष्ठास्तेजस आत्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते तेजस आत्मा भवतीत्यधिदैवतमथाध्यात्मं ॥ १० ॥

---

शीलमस्येत्यन्यतस्त्यजायी ॥ ७ ॥ अग्नौ जातवेदसि, विषासहिः विविधसहनशीलो दुःसहो वान्यैः, हैवान्वेष भवति, प्रसिद्ध एव न लन्यः, उपासनमनु एष उपासको भवति ॥ ८ ॥ अप्सु जलेषु, नाम्नस्यात्मा नाम्नस नाम्न आत्मा कारणं स्वरूपं वा भवति। न च शाखान्तरप्रतिरूपगुणेन विरोधः, अस्ति हि सादृश्यं नाम्नो वस्तुना, तथा हि घट इति वस्तु घट इति नामेति वात्यन्तसादृश्यस्योपलम्भात्। इत्यधिदैवतं, अनेन प्रकारेण दैवतमधिकृत्योक्तमधिदैवतं। अथ अधिदैवतोपासनकथनानन्तरं अध्यात्मं आत्मानं शरीरमधिकृत्योच्यमानमुपासनमध्यात्मं ॥ ९ ॥ आदर्शे दर्पणे भास्वरद्रव्ये इत्यर्थः। प्रतिरूपः सदृशेर रोचि-

स होवाच बालाकिर्य एवैष आदर्शे पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन् संवादयिष्ठाः प्रतिरूप इति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते प्रतिरूपो हैवास्य प्रजायामाजायते नाप्रतिरूपः ॥ ११ ॥

स होवाच बालाकिर्य एवैष छायायां पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन् संवादयिष्ठा द्वितीयोऽनपग इति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते विन्दते द्वितीयात् द्वितीयवान् हि भवति ॥ १२ ॥

---

ष्णुरित्यर्थः। प्रतिरूपो हैवास्योपासकस्य सदृशः प्रसिद्ध एव, प्रजायां प्रजासन्ताननिमित्तं, पुत्रः स्रष्टः, आजायते उत्पद्यते, नाप्रतिरूपः न विलक्षणः ॥ १० ॥ प्रतिश्रुत्कायां श्रुत् श्रवणं, श्रवणं प्रत्यधितिष्ठति प्रतिश्रुत्का दिक्, तस्यां द्वितीयः द्विसङ्ख्यापूरणः अनपगोऽपगमनशून्यः। द्वितीयगुणस्य फलमाह, विन्दते लभते द्वितीयात् भार्याशरीरात् द्वितीयमिति शेषः। अनपगगुणस्य फलमाह, द्वितीयवान् भवति अनपगपुत्रपौत्रादिर्भवतीत्यर्थः ॥ ११ ॥ शब्दः पुरुषमन्वेति गच्छन्त पुरुषं योऽयं ध्वन्यात्मकः शब्दः पश्चाद्गच्छति। असुः जीवनहेतुः, सम्मोहं मरणं, एति गच्छति। नो एवेत्यादिकमाकाशपर्याये

स होवाच बालाकिर्य एवैष प्रतिश्रुत्कायां पुरुष-स्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैत-स्मिन् संवादयिष्ठा असुरिति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते न पुरा कालात् सम्मोहमेति ॥ ॥ १३ ॥

स होवाच बालाकिर्य एवैष शब्दे पुरुषस्तमेवाह-मुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन् संवा-दयिष्ठा मृत्युरिति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते न पुरा कालात्प्रैतीति ॥ १४ ॥

स होवाच बालाकिर्य एवैतत्पुरुषः सुप्तः स्वप्नया* चरति तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा

---

व्याख्यात ॥ १२ ॥ छायापुरुषः छायारूपः पुरुषः, मृत्युर्म-रणहेतुः। नो एवेत्यादिकमाकाशपर्याये व्याख्यातं, प्रमीयते निधनं गच्छति ॥ १३ ॥ शारीरः शरीरे भवः, प्रजापतिः प्रजायाः पालकः, प्रजायते प्रजया पशुभिः प्रजापशुवृद्धि-र्भवति ॥ १४ ॥ प्राज्ञः नित्यया प्रज्ञया युक्तः प्राणोपाधिकः, आत्मा आत्मशब्दप्रत्ययालम्बनी, येन प्राज्ञेनात्मना एतत्सुप्तः एतत्स्वप्नदर्शनरूपं शयनं प्राप्तः स्वप्नया चरति स्वप्नेन ग-

---

* स्वप्न्ययेति A.

मैतस्मिन् संवादयिष्ठा यमो राजेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते सर्वं हास्मा इदं श्रैष्ठाय यम्यते ॥ १५ ॥

स होवाच बालाकिर्य एवैष शरीरे पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन् संवादयिष्ठाः प्रजापतिरिति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते प्रजायते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ॥ १६ ॥

स होवाच बालाकिर्य एवैष दक्षिणेऽक्षिणि पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन् संवादयिष्ठा वाच आत्माग्नेरात्मा ज्योतिष

---

च्छति स्वप्नान् पश्यतीत्यर्थः। यमो राजा नियमनहेतुर्दीप्तिमान्। सर्वं निखिलं, ह प्रसिद्धं, अस्मै अस्योपासकस्य इदं प्रत्यक्षादिप्रमाणैरवगम्यमानं, श्रैष्ठ्याय अधिकत्वाय यम्यते ॥ १५ ॥ दक्षिणेऽक्षन् दक्षिणेऽक्षिणि दक्षिणे चक्षुषि, नाम्न आत्मा वर्णात्मकस्य कारणं स्वरूपं वा, अग्नेरात्मा कृशानोः स्वरूपं, ज्योतिष आत्मा प्रकाशमात्रस्य स्वरूपं, एतेषां पूर्वोक्तानां नामाग्निज्योतिषां सर्वेषां निखिलानामात्मा स्वरूपं भवति ॥१६॥ सव्येऽक्षन् वामे चक्षुषि सत्यस्यात्मा विद्युत आत्मा तेजस आत्मा सत्यस्य विद्युतो ज्योतिर्मात्रस्य स्वरूपं, एतेषां सत्यविद्युत्तेजसां सर्वेषामात्मा

आत्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्त एतेषां सर्वेषामात्मा भवति ॥ १७ ॥

स होवाच बालाकिर्य एवैष सव्येऽक्षिणि पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन् संवादयिष्ठाः सत्यस्यात्मा विद्युत आत्मा तेजस आत्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्त एतेषां सर्वेषामात्मा भवति ॥ १८ ॥

---

भवति सर्वेषां स्वरूपं भवति। शेषपर्यायपञ्चदशकेऽपि प्रथमपर्यायवद्व्याख्येयं। इति पुरुषोपदेशपरिसमाप्त्यर्थः ॥ १७ ॥

*ततः सव्ये चक्षुषि पुरुषस्य निराकरणानन्तरं, उ एव तदनन्तरमेव ह किल बालाकिः बलाकस्यापत्यं तूष्णीमास मौनी बभूव, तं तूष्णीम्भूतं बालाकिं होवाचाजातशत्रुः व्याख्यातं। राजोक्तिमाह, एतावत् इयत्परिमाणं नु वितर्के, उतान्यदपीत्यर्थः। बालाका३ हे बालाके प्लुतिर्भर्त्सनार्था यद्यप्ययोग्यं ब्राह्मणस्य भर्त्सनं तथापि गर्वपरिहारार्थं क्रियमाणं न विरुद्धं, गर्वो ह्यस्य महान्तं पुरुषार्थं नाशयन् परमकण्टकः कण्टकोद्धरणञ्च राज्ञा करणीयमिति न्याया-

---

* आदित्ये बृहन् पाण्डरवासश्चन्द्रमसि सोमो राजा विद्युति तेजसी स्तनयित्नौ शब्दस्याकाशे पूर्णं वायाविन्द्रोऽग्नौ विषासहिरप्सु नामस्यादर्शे प्रतिरूपः प्रतिश्रुत्कायां द्वितीयः शब्देऽसुश्छायायां मृत्युः शारीरः प्रजापतिः प्राज्ञो यमो राजा दक्षिणेऽक्षन्नामः सव्येऽक्षन् सत्यस्य। इति F. G. किन्तु T. कायां नास्ति।

तत उ ह बालाकिस्तूष्णीमास तं होवाचाजातशत्रु-रेतावन्नु बालाका३ इत्येतावदिति होवाच बालाकि-स्तं होवाचाजातशत्रुर्मृषा वै खलु मा संवादयिष्ठा* ब्रह्म ते ब्रवाणीति यो† वै बालाक एतेषां पुरुषाणां

दविरुद्धं, इति अनेन प्रकारेण राजोवाचेत्यन्वयः। एव राज्ञोक्तोऽपगतगर्वः, एतावद्धि यद्देवोक्त नातोऽधिकमहं किञ्चन ब्रह्म वेद्मीति शेषः। इति होवाच बालाकिः एवं किलोक्तवान् बलाकस्यापत्यं। तं अपगतगर्वं बालाकिं, होवाचाजातशत्रुः व्याख्यातं। मा मामजातशत्रुं मृषा वै वितथमेव, किल निश्चितं समवादयिष्ठा ब्रह्म ते ब्रवाणीति व्याख्यातं। एवमुक्त्वा पुनर्बालाकेरधोवदनस्य लज्जा-जडस्यापगतगर्वस्यानुग्रहार्थं, सोऽजातशत्रुः ह किल उवाच उक्तवान् बालाकिं प्रति। राजोक्तिमाह, यः त्वया प्रस्ता-वितो ब्रह्मत्वेन वै प्रसिद्धः सत्यज्ञानादिलक्षणः, बालाके हे बालाके एतेषां आदित्यादिस्थानां पुरुषाणां त्वयोक्तानां पुरुषाणां कर्ता उत्पादकः, यस्य वा यस्य प्रसिद्धस्य वेदान्तेषु वाशब्दः पूर्वोक्तव्युदासार्थः किमल्पाभिधानेनेत्यर्थः, एतत् भूतभौतिकरूपं विश्वं कर्म क्रियत इति येनोत्पाद्यत इत्यर्थः, सः त्वदुक्तपुरुषैः सह विश्वस्य कर्ता वै प्रसिद्धः सत्यज्ञानादि-लक्षणः वेदितव्यः साक्षात्करणीयः श्रवणाद्युपायैः, इति अनेन

* समवादयिष्ठा इति F. G. टी०। † स होवाच य इति F.G टी०।

कर्ता यस्य वै तत्कर्म स वै वेदितव्य इति तत उ ह बालाकिः समित्पाणिः प्रतिचक्रम उपायानीति तं होवाचाजातशत्रुः प्रतिलोमरूपमेव * तन्मन्ये यत् क्षत्रियो ब्राह्मणमुपनयेतैहि† व्येव त्वा ज्ञपयिष्यामीति तं ह

प्रकारेणोवाचेत्यन्वय.। तत उ तत एव राजोक्तेरनन्तरं ह किल बालाकि. बलाकस्यापत्य ब्रह्म जिज्ञासुः समित्पाणिः समित्कर: प्रतिचक्रमे प्रतिचक्राम राजानं प्रति ब्रह्मोपदेशार्थं गृहीतोपायन आजगामेत्यर्थः। वाचा चैवं व्याहरत् उपायानि यदि भवतोऽनुज्ञा तदा भवन्त गुरुत्वेन समीपे आगच्छानि, इति अनेन प्रकारेण, प्रतिचक्रामेत्यन्वयः। तं अपगतगर्वं ब्राह्मण दीनतमामवस्थां प्राप्तं ह किल उवाचाजातशत्रुः उक्तवान् राजा, प्रतिलोमरूपमेव विपरीतरूपमेव न त्वनुरूपं स्यात् भवेत् यत् यस्मात् क्षत्रियः न्यूनवर्णः क्षतत्राणकारी ब्राह्मण उत्तमवर्णं द्विजोत्तमं उपनयेत् ब्रह्मविद्यायै दीक्षयेत्। मा च ते भयं यदसौ राजा न वक्ष्यतीत्येवमाह, एहि अस्माज्जनसमवायादेकान्तमागच्छ, व्येव त्वा ज्ञपयिष्यामि त्वा त्वां गुरुं विज्ञपयिष्याम्येव, यज्जानामि तत्तुभ्य वदन्न वञ्चयिष्यामीत्यर्थ.। इति अनेन प्रकारेणोक्तानन्तरं तं बालाकिं ब्रह्मविद्यार्थिनं ह किल पाणावभिपद्य करे सखेहं गृहीत्वा प्रवव्राज सभादेशाद्देशान्तरं जगाम राजा। तौ

* स्यादिति F. G. टी०। † उपनयेदेहीति F. G. टी०।

पाणावभिपद्य प्रवव्राज तौ ह सुप्तं *पुरुषमाजग्मतु-स्तं हाजातशत्रुरामन्त्रयाञ्चक्रे †बृहत्पाण्डरवासः सोम राजन्निति स उ ह शिश्य एव‡ तत उ हैनं यष्ट्या-विचिक्षेप स तत एव समुत्तस्थौ तं होवाचाजातशत्रुः क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्वैतदभूत्कुत एतदा-

राजबालाकी ह किल सुप्तं पुरुषं अनेककर्मश्रमाकुलं शयान राजपुरुषं कञ्चिदीयतुः प्राप्तवन्तौ। तं सुप्तं पुरुषं ह किल अजातशत्रुः एतन्नामा राजा आमन्त्रयाञ्चक्रे, वक्ष्यमाणैर्नामभिः सम्बोधयामास। सम्बोधननामान्याह, बृहन् हे सर्वस्मादभ्यधिक प्राण, पाण्डरवासः पाण्डराः आपो वाससी यस्य प्राणस्य तत्सम्बोधन हे पाण्डरवासः, सोम सोमात्मक प्राण राजन् हे दीप्तिमन् प्राण, इति सम्बोधनपरिसमाप्त्यर्थः। सः बृहन्नित्यादिना सम्बोधितः प्राणः, उ ह अपि प्रसिद्धोऽवस्थान्तर आत्मत्वेन तूष्णीमेव मौनेनैव शिश्ये§ शयन चक्रे। तत उ तदनन्तरमेव ह किल एन शयानं पुरुषं यष्ट्या वेण्वादितरुकाष्ठेन आविचिक्षेप आसमन्तात् ताडितवान्। सः शयानः पुरुषः प्राणाद्व्यतिरिक्तो यष्टिघातसञ्जातवेदनः, तत एव तदानीमेव न तु कालान्तरे समुत्तस्थौ सम्यगुत्थानं कृतवान्।

* पुरुषं कञ्चिदीयतुरिति F G. टी०। † बृहन् इति F. G. टी०।
‡ स उ ह तूष्णीमेव शिश्ये ( शिश्य इति B. D. ) इति F. G टी०। § शिश्य इति B. D. (शिश्य इति च अ०१।ख०१४। पठ्यते।)

गादिति तत उ ह बालाकिर्न विजज्ञे* तं होवाचाजातशत्रुर्यत्रैष एतद्बालाके पुरुषोऽशयिष्ट यत्रैतदभूद्यत एतदागादिति †हिता नाम पुरुषस्य नाड्यो हृदयात्पुरीततमभिप्रतन्वन्ति तद्यथा सहस्रधा केशो ‡विपाटितस्तावदण्व्यः पिङ्गलस्याणिम्ना§ तिष्ठन्ति शुक्लस्य कृष्णस्य पीतस्य लोहितस्य च तासु तदा भवति यदा सुप्तः स्वप्नं न कञ्चन पश्यति ॥ १९ ॥

---

तं होवाचाजातशत्रुः, तं प्राणात्मवादिनं बालाकिं, व्याख्यातमन्यत्। राजोक्तिमाह, क्व कुत्र एषः प्राणाद्व्यतिरिक्तः शयानः, एतत् सर्वचैतन्यशून्यं यथा तथा, बालाके हे बालाके पुरुषः चेतनः प्राणादीनां स्वामी अशयिष्ट शयनमकुरुत, क्व कस्मिन् प्रदेशे एतत् उक्तं शयनं अभूत् जातं। एकः प्रश्नः पुरुषविषये, अपरोऽवस्थाविषये। पुरुषशयनयोर्देशं पृष्ट्वा पुरुषस्यागमनदेशं पृच्छति, कुतः कस्माद्देशात् एतत् जागरणं प्रति एतदागमनं वा, आगात् आगतवान्, स्तुतिर्विचारणार्था विचार्य कथयेत्यर्थः। इति अनेन प्रकारेण प्रश्नमकरोदिति शेषः।· तत उ अपि तद्राज्ञा पृष्टं, ह किल बालाकिः बलाकस्यापत्यं न विजज्ञे न विज्ञातवान् ॥ १८ ॥

---

* तदु ह बालाकिर्न विजज्ञौ ॥ १८ ॥ इति F G.।

† हिता नाम हृदयस्य नाड्यो हृदयादिति F. G. टी०।

‡ विपतित इति F. G. टी०। § अणिम्न्यास्तिष्ठन्तीति A.

**अथास्मिन्प्राण एवैकधा भवति तदेनं वाक् सर्वैर्नामभिः सहाप्येति चक्षुः सर्वैः रूपैः सहाप्येति श्रोत्रं सर्वैः शब्दैः सहाप्येति मनः सर्वैर्ध्यानैः सहाप्येति स यदा**

---

तं अज्ञातस्वप्नं बालाकिं होवाचाजातशत्रुः यत्रैष एतद्बालाके पुरुषोऽशयिष्ट यत्रैतदभूद्यत एतदागात् व्याख्यातं। किमः स्थले यदोऽवस्थानं विशेषः। स्वयं तं देशमाह राजा, हिता नाम प्राणिनां हितकरणाद्धिता इत्यभिधानाः, हृदयस्य हृदयपुण्डरीकसम्बन्धिन्यो हृदयपुण्डरीकान्निर्गता इत्यर्थः, नाद्यः शिराः हृदयात् हृदयपुण्डरीकान्निर्गत्य पुरीततं आन्त्रं हृदयवेष्टनं अभिप्रतन्वन्ति सर्वतः प्रकर्षेण विस्तारयन्ति वेष्टयन्तीत्यर्थः। तद्यथा यावत्परिमाणमित्यर्थः, सहस्रधा केशो विपतितः* बालः सहस्रप्रकारेण विविधं †पतितः, केशस्य सहस्रांश इत्यर्थ.। तावत् तत्परिमाणाः अण्व्यः सूक्ष्माः, पिङ्गलस्य चित्रवर्णस्य अणिम्ना अणुतमेन रसेनातिसूक्ष्मेणेत्यर्थः, तिष्ठन्ति पूर्णा वर्तन्ते। सामान्यतो वर्णमुक्त्वा विशेषतो वर्णानाह, शुक्लस्य श्वेतस्य, अणिम्नेति सर्वेषु वर्णेष्वनुवर्तते, "कृष्णस्य कालस्य पीतस्य सुवर्णवर्णस्य लोहितस्य रक्तस्येत्येवंप्रकारस्य वर्णान्तरस्याप्यणिम्ना रसेन पूर्णास्तिष्ठन्ति। तासु हृदयवेष्टनपुरीतत्प्रतिष्ठितासु हृदयगमनमार्गभूतासु सामीप्येन तदा भवति तस्मिन् शयनकाले वर्तते। स्वप्नो नाडीषु वर्तमानस्य भवतीत्यर्थः। स्वप्नस्थान-

---

* विपाटित इति D. † पाटित इति D.

प्रतिबुध्यते *यथाग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः प्राणा यथायतनं विप्र-

---

मभिधाय सुषुप्तस्यान मजागरणमाह, यदा यस्मिन् काले सुप्तः स्वप्नं न कश्चन पश्यत्यथास्मिन् प्राण एवैकधा भवति, तदेन वाक् सर्वैर्नामभिः सहाप्येति, चक्षुः सर्वैः रूपैः सहाप्येति, श्रोत्रं सर्वैः शब्दैः सहाप्येति, मनः सर्वैर्ध्यानैः सहाप्येति, स यदा प्रतिबुध्यते यथाग्नेर्विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवाः देवेभ्यो लोकाः व्याख्यातं। अयमर्थः। नाडीद्वारा पुरीतद्वेष्टनेऽनेकनाडीकारणे हृदयपुण्डरीके स्थिताकाशान्तर्वर्तिक्रियाशक्त्युपाधावानन्दात्मनि सुषुप्तिं प्राप्य तत एव जागरणमागच्छति यः सोऽपगताधाराधेयभेदो ब्रह्मशब्दाभिधेयः न तु भवदभिमत. प्राणादिरधिदैवतमध्यात्मं चेति। कथमसौ ब्रह्मशब्दाभिधेय उपलब्धुं शक्यते इति बालाकेर्हृदयगतामाशङ्कामपाकरिष्यन् दृष्टान्तपुरःसरमाह, तत् तत्र उपलब्धौ दृष्टान्तः यथा दृष्टान्ते क्षुरः तीक्ष्णाग्रः प्रसिद्धः चौरकर्मणि क्षुरधाने क्षुरो धीयते यस्मिन् पात्रे तत् क्षुरधानं तस्मिन् अवहितः प्रक्षिप्तः स्यात् भवेत्। अयं हृदयपुण्डरीके शरीरैकदेशे तदुपलब्धौ दृष्टान्तः। इदानीं सर्वशरीरे उपलब्ध्यर्थं दृष्टान्तमाह, विश्वम्भरो वा विश्वम्भरोऽग्निः वाशब्दो दृष्टान्तान्तरे, विश्वम्भरकुलाये अग्निनीडे अरण्यादौ, एवमेव अने-

---

* यथाग्नेर्विस्फुलिङ्गा इति F. G. टी॰ ।

तिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः *स एष प्राण एव प्रज्ञात्मेदं शरीरमात्मानमनुप्रविष्ट आलोमभ्य आनखेभ्यस्तद्यथा क्षुरः क्षुरधानेऽवोपहितो विश्वम्भरो वा

---

नैव प्रकारेण एषः ब्रह्म ते ब्रवाणीति यो भवता प्रक्रतः प्राज्ञः नित्यः स्वयप्रकाशः प्रज्ञायुक्तः आत्मा अस्मत्प्रत्ययव्यवहारयोग्यः, इदं ‡शरीरं इमं शरीरे भव, एतच्छरीरं सेन्द्रियमित्यर्थः, आत्मानं आत्मशब्दप्रत्ययालम्बनं अनुप्रविष्टः सृष्टिमनु प्रवेशनं कृतवान्। प्रवेशावधिमाह, आलोमभ्य आनखेभ्यः लोमनखपर्यन्तं, नखाग्रशरीरबहिर्गतकेशान्मुक्त्वा समग्रे शरीर इत्यर्थः। स्वप्नसुषुप्तिजागरणेषु प्राणाद्व्यतिरिक्तमात्मानमभिधाय तस्य च सर्वस्मिन शरीरे हृदये च सामान्यविशेषाभ्यां व्याप्तिं, इदानीं तस्यैव शरीरं विवक्षुर्दृष्टान्तपुरःसरमाह, तं आलोमभ्यः आनखेभ्यः शरीरे सामान्यविशेषाभ्यां प्रविष्टं एतं बुद्धिसाक्षिणं आत्मानं अस्मत्प्रत्ययव्यवहारयोग्यमानन्दात्मानं एते अपगताधिदैवभेदा अध्यात्मप्रत्यञ्चा इव आत्मानः वागाद्याः अन्ववस्यन्ति आत्मनो निश्चयमनु पश्चान्निश्चिन्वन्ति। तत्र दृष्टान्तमाह, यथा दृष्टान्ते श्रेष्ठिनं श्रेष्ठः श्रेष्ठत्व प्रधानत्वं सः गुणो यस्यास्ति सः श्रेष्ठी, तं प्राधान्यवन्तं कुटुम्बिनमित्यर्थः, स्वाः स्वसम्बन्धिनो ज्ञात्युपलक्षिता उपजीवकाः अन्ववस्यन्तीत्यनुवर्तते। निश्चये

---

* स एष इत्यादि आनखेभ्य इत्यन्त F G. टी० नास्ति।

† अवहित. स्यादिति F G.　　‡ शारीरमिति B. C

विश्वम्भरकुलाय एवमेवैष *प्रज्ञात्मेदं शरीरमात्मान-
मनुप्रविष्ट आलोमभ्य आनखेभ्यस्तमेतमात्मानमेत
आत्मानोऽन्ववस्यन्ते यथा श्रेष्ठिनं स्वास्तद्यथा श्रेष्ठी

प्राधान्यमुक्ता भोगेऽपि प्राधान्यं वक्तुं दृष्टान्तमाह, तत् तत्र भोगप्राधान्ये दृष्टान्तः, यथा दृष्टान्ते श्रेष्ठो कुटुम्बी स्वैः ज्ञात्यादिभिः सह भुङ्क्ते अन्नमत्ति, यथा वा यद्वत्, वाशब्दः प्रकारान्तरेण दृष्टान्तार्थः, श्रेष्ठिनं प्रधानकुटुम्बिन द्रव्यद्वारा अन्नमिव स्वाः ज्ञात्याद्याः भुञ्जते अदन्ति, एवमेव अनेनैव प्रकारेण न त्वन्येन, एषः प्राज्ञ आत्मा व्याख्यातं, ज्ञान-क्रियाशक्त्युपाधिरित्यर्थः, एतैः प्रतिप्राणिव्यवस्थितैः आत्म-भिः अस्मच्छब्दप्रत्ययालम्बनैः वागादिभिः सह भुङ्क्ते अत्ति। अथवा दृष्टान्तदार्ष्टान्तिकयोस्तृतीया करणार्था। न हि नि-र्मनुष्यस्य कुटुम्बिनो द्रव्यवतोऽपि भोगः सम्भवति परैर्द्र-व्यापहारादेः सम्भवात्। एवमसङ्गोदासीनस्य चितिस्वभाव-स्यात्मनोऽपि विना करणादिकं न भोगः, यथा श्रेष्ठी स्वैः व्या-ख्यातं, उत्पन्ने कार्ये प्रधानकुटुम्बी येन प्रकारेण स्वैर्ज्ञाति-प्रभृतिभिः सह पर्यालोच्यान्ववस्यति, एवमेतैरात्मभिरय-मात्मेति बहिरेवावगन्तव्यं। तमेतमात्मानमित्यस्य प्रपञ्चार्थ-माह, एवं वै अनेनैव यथा श्रेष्ठिनं स्वा इति वक्ष्यमाणेनैव प्रकारेण तं इन्द्रियाणामधिष्ठातारं आत्मानमेत आत्मानो-

* प्राज्ञ आत्मेति F. G. टी०।

स्वैर्भुङ्क्ते यथा वा *स्वाः श्रेष्ठिनं भुञ्जन्त्येवमेवैष †प्रज्ञात्मैतैरात्मभिर्भुङ्क्ते ‡एवमेवैत आत्मान एतमात्मानं भुञ्जन्ति स यावद्ध वा इन्द्र एतमात्मानं न विजज्ञे ता-

ऽन्ववस्यन्ति यथा श्रेष्ठिनं स्वाः, व्याख्यात। अत्राद्यन्तपर्यायर्योः सामान्यविशेषाभ्यां पुनरुक्तिपरिहारः। अथवा यथा वा श्रेष्ठिनं स्वा इत्यस्य दार्ष्टान्तिक एवं वा इत्यादि, न ह्यात्मनो निश्चयमन्तरेणान्यो भोगः कर्तुं शक्यः, अस्मिन् पक्षे यथा श्रेष्ठी स्वैः यथा श्रेष्ठिनं स्वा इति वचनद्वयं निगमनार्थत्वेन व्याख्येयं। अथवा निश्चयोऽध्यात्मको भवति, आपत्कालीनोऽनापत्कालीनश्च। तत्रापत्कालीनः प्रधानबुद्ध्यनुसारी यथा राजबुद्ध्यनुसारी निश्चयो मृगयायां मन्त्रिणां, तादृशं हृदि निधाय तमेतमात्मानमिति प्रथममुक्तं। §अनापत्कालीनस्तु बन्धुभिः सह कुटुम्बिनः कुटुम्बिना सह बन्धूनाञ्च विचार्य भवति, तादृशमङ्गीकृत्योक्तं यथा श्रेष्ठी स्वैरेवं वा इत्यादि, अस्मिन् पक्षे यथा वा श्रेष्ठिनं स्वा भुञ्जत इत्यस्य एवमात्मानं प्राणा भुञ्जत इतीदं बहिरेवावगन्तव्यं। अस्यात्मनो ज्ञाने कस्य किं फलं जातमिति बालाकिशङ्कां व्यावर्तयितुमजातशत्रुराह, सः प्रसिद्धः प्रतर्दनस्य गुरुः यावत् यावन्तं कालं ह किल श्रुतमस्माभिः

* श्रेष्ठिनं स्वा भुञ्जते इति F G. टी०। †प्राज्ञ आत्मेति F G टी०।
‡ यथा श्रेष्ठी स्वैरेवं वै तमात्मानमेत आत्मानोऽन्ववस्यन्ति यथा श्रेष्ठिनं स्वाः स यावदिति F G. टी०।
§ अत्रापि आपत्कालीन इति सर्वपुस्तकेषु वर्तते।

वदेनमसुरा अभिबभूवुः स यदा विजज्ञेऽथ हत्वासुरान्विजित्य *सर्वेषाञ्च देवानां सर्वेषाञ्च भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं †पर्यैत्तथो एवैवं विद्वान् सर्वान्

पूर्वेभ्य इत्यर्थः, वै प्रसिद्धः प्रजापतिशिष्यः एकाधिकशतवर्षब्रह्मचारी ब्रह्मविद्यार्थं, इन्द्रः परमैश्वर्यसम्पन्नस्त्रिलोकीपतिः, एतं मयोक्तं सर्वेन्द्रियोपजीव्य आत्मानं आनन्दात्मानं न विजज्ञे विशेषेणायमसाविति न ज्ञातवान्। तावत् तावन्तं काल एतं आत्मज्ञानशून्यमिन्द्रं असुराः शास्त्रनिषिद्धार्थप्रवृत्ता वागादयो विरोचनादयो वा अभिबभूवुः अभिभवं पराभवं चक्रुः। सोऽसुरैरभिभूतः यदा यस्मिन् काले, य आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमन्विष्य विजानातीति प्रजापतिवाक्यं सभायां केनापि प्रकारेण श्रुत्वानन्तरं विजज्ञौ, य एषोऽक्षिणि पुरुषो दृश्यत इत्यादेः प्रजापतेरुपदेशाद्विशेषेणायमसाविति ज्ञातवान् साक्षात्कृतवान् इत्यर्थः। अथ तदा हत्वा निपात्य असुरान् शास्त्रनिषिद्धप्रवृत्तान् वागादीन् विरोचनादीन् वा विजित्य विजय प्राप्य त्रिलोकीं स्वाधीनां विधायेत्यर्थः। सर्वेषां निखि-

* सर्वेषा देवाना श्रैष्ठ्यमिति F G. टी०।

† परीयायेति F. G. टी०।

पाप्मनोऽपहत्य सर्वेषाञ्च भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति य एवं वेद य एवं वेद ॥ २० ॥

---

त्वानां देवानां अग्न्यादीनां श्रैष्ठ्यं श्रेष्ठत्वं प्राधान्यं, स्वाराज्यं स्वराज्यस्य भावोऽप्रतिहतत्वं स्वाराज्यं, आधिपत्य गर्भदासानिव सर्वानधिष्ठाय पालयितृत्वमाधिपत्यं पर्य्याय सर्वतो गतवान्। तथो एवापि तद्वदेव न त्वन्यथा, एवं विद्वान् अवस्थात्रयातीतः प्राणादिभिराश्रयणीयोऽसङ्गोदासीनस्वभावः आकाशवत्सर्वगतोऽपि शरीरे च हृदये च सामान्यविशेषाभ्यामुपलभ्यमानचैतन्योऽपगतसर्वधर्म आनन्दात्माहमस्मीत्येवं ज्ञातवान्, सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं भूतानां स्थिरजङ्गमानां, व्याख्यातमन्यत्, पर्य्येति प्राप्नोति। यः शमादिसाधनचतुष्टयसम्पन्नः, एवं वेद इन्द्रवदुक्तमात्मानं जानीते एवं वेद व्याख्यातं। वाक्याभ्यास उपनिषत्परिसमाप्त्यर्थः ॥ १९ ॥

कौषीतकिब्राह्मणमात्मविद्या
गूढापि सम्यक् प्रकटीकृतेयं।
परोपकाराय मया श्रुतीनां
पदावलोकैकपरेण नित्यं ॥
त्रय्या अथर्वाङ्गिरसश्च तद्व-
द्ये वा प्रसिद्धा इह लोकमध्ये।

इत्यारण्यके कौषीतकिब्राह्मणोपनिषदि चतुर्थो ऽध्यायः समाप्तः ॥ * ॥

---

अतो मयाकारि पदावलोक-
स्तेषां कृतेऽस्मिन् शिव एतु तुष्टिं ॥
गङ्गादयः शीतलनीरपूरा
नैवाश्रितास्तैस्सरितोऽल्पभाग्यैः।
न्यूनत्वमासां किमिवात्र भूयात्
ममापि तद्वत्कृतयः प्रवृत्ताः ॥
आत्मावबोधाय मदुक्तिवारां
प्रवृत्तिरेषोपनिषत्समूहे।
विबुध्य मन्त्राः सततं स्वचित्तं
प्रक्षालयन्त्वत्र विमुक्तिकामाः ॥
सर्वं न सर्वस्य हित प्रियं वा
व्यवस्थितं येन लभामहेऽदः।
प्रिया हितास्तेन विमुक्तिभाजां
पदावलोका विहितास्ततोऽमी ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्दात्मपूज्यपादशिष्यस्य श्रीशङ्करानन्दभगवतः कृतौ कौषीतकिब्राह्मणोपनिषद्दीपिकायां चतुर्थोऽध्यायः समाप्तः ॥ ० ॥

---

अस्या उपनिषदः पाठप्रणालीद्वयं वर्त्तते। तयोरेकामवलम्ब्यैतन्मूलं मुद्रितं द्वितीयामवलम्ब्यैव टीका मुद्रिता। आद्याध्यायद्वयस्य प्रणाली-वैपरीत्यं केवलं टीकायां द्रष्टव्यं, उत्तराध्यायद्वयस्य तु विपरीतपाठ-सूचको मूलखण्डः कार्य्यारम्भात्परं मम हस्ते समायातः। अतः स एव विद्वत्समाजावलोकनाय पृथक् प्रकाश्यते। F. G. चिह्नोपलक्षितं पुस्तकद्वयं काशीतः समायातं तदेवैतस्यादर्शस्वरूपं जातं।

---

प्रतर्द्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण च तं हेन्द्र उवाच प्रतर्द्दन वरं ते ददानीति स होवाच प्रतर्द्दनस्त्वमेव मे वृणीष्व यं त्वं मनुष्याय हिततमं मन्यस इति तं हेन्द्र उवाच न* वै वरः परस्मै वृणीते त्वमेव वृणीष्वेत्यवरो वै तर्हि किल म इति होवाच प्रतर्द्दनोऽथो खल्विन्द्रः सत्यादेव नेयाय सत्यं हीन्द्रः स हेन्द्र उवाच मामेव विजानीह्येतदेवाहं मनुष्याय हिततमं मन्ये यन्मां विजानीयात् त्रिशीर्षाणं त्वाष्ट्रमहनमरुन्मुखान्† यतीन् सालावृकेभ्यः प्राय-च्छं बह्वीः सन्धा अतिक्रम्य दिवि प्रह्लादीनतृणमहमन्तरिक्षे पौलोमान् पृथिव्यां ‡कालकञ्ज्यान् तस्य मे तत्र न लोम च मा मीयते स यो मां विजानीयान्नास्य केन च न कर्मणा

---

* न मे वरं परस्मै वृणीत इति G.

† अहनं त्वरुन्मुखानिति F. मन्त्रमुखानिति G.

‡ कालकाश्यानिति G.

लोको मीयते न मातृवधेन न पितृवधेन न स्तेयेन न भ्रूणहत्यया नास्य *पापं चकृषो मुखान्नीलं वेतीति ॥ १ ॥

स होवाच प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्वायुः स प्राणः प्राणो वा आयुः प्राण उ वा अमृतं यावद्ध्यस्मिंच्छरीरे प्राणो वसति तावदायुः प्राणेन ह्येवामुष्मिँल्लोकेऽमृतत्वमाप्नोति प्रज्ञया सत्यं सङ्कल्पं †स यो मामायुरमृतमित्युपास्ते सर्वमायुरस्मिँल्लोक एत्याप्नोत्यमृतत्वमक्षितिं स्वर्गे लोके तद्धैक आहुरेकभूयं वै प्राणा गच्छन्तीति न हि कश्चन शक्नुयात् सकृद्वाचा नाम ‡प्रज्ञपयितुं चक्षुषा रूपं श्रोत्रेण शब्दं मनसा §ध्यातुमित्येकभूयं वै प्राणा भूत्वैकैकं सर्वाण्येवैतानि प्रज्ञपयन्ति वाचं वदन्तीं सर्वे प्राणा अनुवदन्ति चक्षुः पश्यत् सर्वे प्राणा अनुपश्यन्ति श्रोत्रं शृण्वत् सर्वे प्राणा अनुशृण्वन्ति मनो ध्यायत् सर्वे प्राणा अनुध्यायन्ति प्राणं प्राणन्तं सर्वे प्राणा अनुप्राणन्ति एवमु हैतदिति हेन्द्र उवाचास्ति त्वेव प्राणानां निःश्रेयसमिति ॥ २ ॥

जीवति वागपेतो मूकान् हि पश्यामो जीवति चक्षुरपेतोऽन्धान् हि पश्यामो जीवति श्रोत्रापेतो बधिरान् हि पश्यामो अथ खलु जीवति बाहुच्छिन्नो जीवत्यूरुच्छिन्न इत्येवं हि पश्याम इति प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति

---

* पापं चनेति G.

† स यो म आयुरिति F

‡ प्रज्ञापयितुमिति G.

§ ध्यानमित्येकभूयं वै प्राणा एकैकं सर्वाण्येतानि प्रज्ञपयन्तीति G

तस्मादेतदेवोक्थमुपासीतेति यो वा प्राणः सा प्रज्ञा या वा प्रज्ञा स प्राणः सह ह्येतावस्मिञ्छरीरे वसतः सहो-त्क्रमतस्तस्यैषैव दृष्टिरेतद्विज्ञानं यत्रैतत्पुरुषः सुप्तः स्वप्नं न कञ्चन पश्यत्यथास्मिन् प्राण एवैकधा भवति तदेनं वाक् सर्वै-र्नामभिः सहाप्येति चक्षुः सर्वैः रूपैः सहाप्येति श्रोत्रं सर्वैः शब्दैः सहाप्येति मनः सर्वैर्ध्यानैः सहाप्येति स यदा प्रति-बुध्यते यथाग्नेर्ज्वलतः विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादा-त्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः तस्यैषैव सिद्धिरेतद्विज्ञानं यत्रैतत्पुरुष आर्तो मरि-ष्यन्नाबल्यं न्येत्य सम्मोहं न्येति तदाहुरुदक्रमीच्चित्तं न शृणोति न पश्यति न वाचा वदतीति। अथास्मिन् प्राण एवैकधा भवति तदेनं वाक् सर्वैर्नामभिः सहाप्येति चक्षुः सर्वै रूपैः सहाप्येति श्रोत्रं सर्वैः शब्दैः सहाप्येति मनः सर्वैः ध्यानैः सहाप्येति स यदा प्रतिबुध्यते यथाग्नेर्विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मा-दात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः ॥ ३ ॥

स यदास्माच्छरीरादुत्क्रामति वागस्मात् सर्वाणि नामान्य-भिविसृजते वाचा सर्वाणि नामान्याप्नोति प्राणोऽस्मात् सर्वान् गन्धानभिविसृजते प्राणेन सर्वान् गन्धानाप्नोति चक्षुरस्मात् सर्वाणि रूपाण्यभिविसृजते चक्षुषा सर्वाणि रूपाण्याप्नोति श्रोत्रमस्मात् सर्वान् शब्दान् अभिविसृजते श्रोत्रेण सर्वा-ञ्छब्दानाप्नोति मनोऽस्मात् सर्वाणि ध्यानान्यभिविसृजते

मनसा सर्वाणि ध्यानान्याप्नोति सैषा प्राणे सर्वाप्तिर्यो वै प्राणः सा प्रज्ञा या वा प्रज्ञा स प्राणः सह ह्येतावस्मिञ्छरीरे वसतः सहोत्क्रामतोऽथ खलु यथा प्रज्ञायां सर्वाणि भूतान्येकं भवन्ति तद्व्याख्यास्याम. ॥ ४ ॥

वागेवास्या एकमङ्गमदूढं तस्यै नाम परस्तात्प्रतिविहिता भूतमात्रा प्राण एवास्या एकमङ्गमदूढं तस्य गन्धः परस्तात्प्रतिविहिता भूतमात्रा चक्षुरेवास्या एकमङ्गमदूढं तस्य रूपं परस्तात्प्रतिविहिता भूतमात्रा श्रोत्रमेवास्या एकमङ्गमदूढं तस्य शब्दः परस्तात्प्रतिविहिता भूतमात्रा जिह्वैवास्या एकमङ्गमदूढं तस्या अन्नरसः परस्तात्प्रतिविहिता भूतमात्रा हस्तावेवास्या एकमङ्गमदूढं तयोः कर्म परस्तात्प्रतिविहिता भूतमात्रा शरीरमेवास्या एकमङ्गमदूढं तस्य सुखदुःखे परस्तात्प्रतिविहिता भूतमात्रोपस्थ एवास्या एकमङ्गमदूढं तस्यानन्दो रतिः प्रजातिः परस्तात्प्रतिविहिता भूतमात्रा पादावेवास्या एकमङ्गमदूढं तयोरित्याः परस्तात्प्रतिविहिता भूतमात्रा प्रज्ञैवास्या एकमङ्गमदूढं तस्यै धियो विज्ञातव्यं कामाः परस्तात्प्रतिविहिता भूतमात्रा ॥ ५ ॥

प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोति प्रज्ञया प्राणं समारुह्य प्राणेन सर्वान् गन्धानाप्नोति प्रज्ञया चक्षुः समारुह्य चक्षुषा सर्वाणि रूपाण्याप्नोति प्रज्ञया श्रोत्रं समारुह्य श्रोत्रेण सर्वाञ्छब्दानाप्नोति प्रज्ञया जिह्वां समारुह्य जिह्वया सर्वानन्नरसानाप्नोति प्रज्ञया हस्तौ समारुह्य हस्ताभ्यां सर्वाणि कर्मा-

आप्नोति प्रज्ञया शरीरं समारुह्य शरीरेण सुखदुःखे आप्नोति प्रज्ञयोपस्थं समारुह्योपस्थेनानन्दं रतिं प्रजातिमाप्नोति प्रज्ञया पादौ समारुह्य पादाभ्यां स वा इत्या आप्नोति प्रज्ञयैव धियः समारुह्य प्रज्ञयैव धियो विज्ञातव्यं कामानाप्नोति ॥ ६ ॥

न हि प्रज्ञापेता वाङ्नाम किञ्चन प्रज्ञपयेदन्यत्र मे मनोऽभूदित्याह नाहमेतन्नाम प्राज्ञासिषमिति न हि प्रज्ञापेतः प्राणो गन्धं कञ्चन प्रज्ञपयेदन्यत्र मे मनोऽभूदित्याह नाहमेतं गन्धं प्राज्ञासिषमिति न हि प्रज्ञापेत चक्षूरूपं किञ्चन प्रज्ञपयेदन्यत्र मे मनोऽभूदित्याह नाहमेतद्रूपं प्राज्ञासिषमिति न हि प्रज्ञापेतं श्रोत्रं शब्दं कञ्चन प्रज्ञपयेदन्यत्र मे मनोऽभूदित्याह नाहमेतं शब्दं प्राज्ञसिषमिति न हि प्रज्ञापेता जिह्वान्नरसं कञ्चन प्रज्ञपयेदन्यत्र मे मनोऽभूदित्याह नाहमेतमन्नरसं प्राज्ञासिषमिति न हि प्रज्ञापेतौ हस्तौ कर्म किञ्चन प्रज्ञपयेयातामन्यत्र मे मनोऽभूदित्याह नाहमेतत्कर्म प्राज्ञासिषमिति न हि प्रज्ञापेतं शरीरं सुखं न दुःखं किञ्चन प्रज्ञपयेदन्यत्र मे मनोऽभूदित्याह नाहमेतत् सुखं न दुःखं प्राज्ञासिषमिति न हि प्रज्ञापेत उपस्थ आनन्दं न रतिं न प्रजातिं काञ्चन प्रज्ञपयेदन्यत्र मे मनोऽभूदित्याह नाहमेतमानन्दं न रतिं न प्रजातिं प्राज्ञासिषमिति न हि प्रज्ञापेतौ पादावित्यां काञ्चन प्रज्ञपयेयातामन्यत्र मे मनोऽभूदित्याह नाहमेतामित्यां प्राज्ञासिषमिति न हि प्रज्ञापेता धीः काचन सिध्येन्न प्रज्ञातव्यं प्रज्ञायेत ॥ ७ ॥

न वाचं विजिज्ञासीत वक्तारं विद्यात् न गन्धं विजिज्ञासीत घ्रातारं विद्यान्न रूपं विजिज्ञासीत रूपविद्य विद्यान्न शब्दं विजिज्ञासीत श्रोतारं विद्यान्नान्नरसं विजिज्ञासीतान्नरसस्य विज्ञातारं विद्यान्न कर्म विजिज्ञासीत कर्तारं विद्यान्न सुखदुःखे विजिज्ञासीत सुखदुःखयोर्विज्ञातारं विद्यान्नानन्दं न रतिं न प्रजातिं विजिज्ञासीतानन्दस्य रतेः प्रजातेर्विज्ञातारं विद्यान्नेत्यां विजिज्ञासीतैतारं विद्यान्न मनो विजिज्ञासीत मन्तारं विद्यात्ता वा एता दशैव भूतमात्रा अधिप्रज्ञं दश प्रज्ञामात्रा अधिभूतं यद्धि भूतमात्रा न स्युर्न प्रज्ञामात्राः स्युर्यद्वा प्रज्ञामात्रा न स्युर्न भूतमात्राः स्युर्न ह्यन्यतरतो रूपं किञ्चन सिध्येन्नो एतन्नाना तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः स एष प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृतो न साधुना कर्मणा भूयान् नो एवासाधुना कनीयानेष ह्येवैनं साधु कर्म कारयति तं यमन्वानुनेषत्येष उ एवैनमसाधु कर्म कारयति तं यमेभ्यो लोकेभ्यो नुनुत्सत *एष लोकपाल एष लोकाधिपतिरेष सर्वेशः स म आत्मेति विद्यात्॥ ८॥

†इत्यारण्यके पञ्चमोऽध्यायः॥ *॥

---

* एष लोकेशो लोकपालो लोकाधिपतिरेष सर्वेश इति F.

† इति कौषीतकीब्राह्मणोपनिषदि तृतीयोऽध्याय इति G.

गार्ग्यो ह वै बालाकिरनूचानः संस्पष्ट आस सोऽवसदुशीनरेषु सवसन्मत्स्येषु कुरुपञ्चालेषु काशिविदेहेष्विति स हाजातशत्रुं काश्यमेत्योवाच ब्रह्म ते ब्रवाणीति तं होवाचाजातशत्रुः सहस्रं दद्म त एतस्यां वाचि जनको जनक इति वा उ जना धावन्तीति ॥ १ ॥

स होवाच बालाकिर्य एवैष आदित्ये पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन् समवादयिष्ठा बृहन् पाण्डरवासा अतिष्ठाः* सर्वेषां भूतानां मूर्द्धेति वा अहमेतमुपास इति स यो हैतमेवमुपास्तेऽतिष्ठाः सर्वेषां भूतानां मूर्द्धा भवति ॥ २ ॥

स होवाच बालाकिर्य एवैष चन्द्रमसि पुरुषस्तमेवाहमुपास इति। तं होवाचाजातशत्रुर्मा मैतस्मिन् समवादयिष्ठाः सोमो राजान्नस्यात्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्तेऽन्नस्यात्मा भवति ॥ ३ ॥

स होवाच बालाकिर्य एवैष विद्युति पुरुषस्तमेवाहमुपास इति। तं होवाचाजातशत्रुर्मा मैतस्मिन् समवादयिष्ठास्तेजस्यात्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते तेजस्यात्मा भवति ॥ ४ ॥

स होवाच बालाकिर्य एवैष स्तनयित्नौ पुरुषस्तमेवाहमुपास इति। तं होवाचाजातशत्रुर्मा मैतस्मिन् समवादयि-

---

* पाण्डरवासातिष्ठा इति F.

ष्ठाः शब्दस्यात्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते शब्दस्यात्मा भवति ॥ ५ ॥

स होवाच बालाकिर्य एवैष आकाशे पुरुषस्तमेवाहमुपास इति। तं होवाचाजातशत्रुर्मा मैतस्मिन् समवादयिष्ठाः पूर्णमप्रवर्ति ब्रह्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते पूर्यते प्रजया पशुभिर्नो एव स्वयं नास्य प्रजा पुरा कालात्प्रवर्तते ॥ ६ ॥

स होवाच बालाकिर्य एवैष वायौ पुरुषस्तमेवाहमुपास इति। तं होवाचाजातशत्रुर्मा मैतस्मिन् समवादयिष्ठा इन्द्रो वैकुण्ठोऽपराजिता सेनेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते जिष्णुर्हि वाऽपराजिष्णुरन्यतस्त्यजायी भवति ॥ ७ ॥

स होवाच बालाकिर्य एवैषोऽग्नौ पुरुषस्तमेवाहमुपास इति। तं होवाचाजातशत्रुर्मा मैतस्मिन समवादयिष्ठा विषासहिरिति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते विषासहिर्हैवान्येष भवति ॥ ८ ॥

स होवाच बालाकिर्य एवैषोऽप्सु पुरुषस्तमेवाहमुपास इति। तं होवाचाजातशत्रुर्मा मैतस्मिन् समवादयिष्ठा नाम्नस्यात्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते नाम्नस्यात्मा भवतीत्यधिदैवतमथाध्यात्मं ॥ ९ ॥

स होवाच बालाकिर्य एवैष आदर्शे पुरुषस्तमेवाहमुपास इति। तं होवाचाजातशत्रुर्मा मैतस्मिन् समवादयिष्ठाः प्रतिरूप इति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते प्रति-

रूपो हैवास्य प्रजायां पुत्र आजायते नाप्रतिरूपः ॥ १० ॥

स होवाच बालाकिर्य एवैष प्रतिश्रुत्कायां पुरुषस्तमेवाहमुपास इति। तं होवाचाजातशत्रुर्मा मैतस्मिन् समवादयिष्ठा द्वितीयोऽनपग इति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते विन्दते द्वितीयान् द्वितीयवान् भवति ॥ ११ ॥

स होवाच बालाकिर्य एवैष शब्दः पुरुषमन्वेति तमेवाहमुपास इति। तं होवाचाजातशत्रुर्मा मैतस्मिन् समवादयिष्ठा असुरिति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते नो एव स्वयं नास्य प्रजा पुरा कालात् सम्मोहमेति ॥ १२ ॥

स होवाच बालाकिर्य एवैष छायापुरुषस्तमेवाहमुपास इति। तं होवाचाजातशत्रुर्मा मैतस्मिन् समवादयिष्ठा मृत्युरिति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते नो एव स्वयं नास्य प्रजा पुरा कालात्प्रमीयते ॥ १३ ॥

स होवाच बालाकिर्य एवैष शारीरः पुरुषस्तमेवाहमुपास इति। तं होवाचाजातशत्रुर्मा मैतस्मिन् समवादयिष्ठाः प्रजापतिरिति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते प्रजायते प्रजया पशुभिः ॥ १४ ॥

स होवाच बालाकिर्य एवैष प्राज्ञ आत्मा येनैतत्सुप्तं* स्वप्नया चरति तमेवाहमुपासे इति। तं होवाचाजातशत्रुर्मा मैतस्मिन् समवादयिष्ठा यमो राजेति वा अहमेतमुपास

---

* सुप्तमिति G. पुस्तके पतितं। एतत्सुप्त इति टी॰।

इति स यो हैतमेवमुपास्ते सर्वं हैवास्मा इदं श्रैष्ठ्याय यम्यते ॥ १५ ॥

स होवाच बालाकिर्य एवैष दक्षिणेऽक्षन् पुरुषस्तमेवाहमुपास इति । तं होवाचाजातशत्रुर्मा मैतस्मिन् समवादयिष्ठा नाम्न आत्मा अग्नेरात्मा ज्योतिष आत्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्त एतेषां सर्वेषामात्मा भवति ॥ ॥ १६ ॥

स होवाच बालाकिर्य एवैष सव्येऽक्षन् पुरुषस्तमेवाहमुपास इति । तं होवाचाजातशत्रुर्मा मैतस्मिन् समवादयिष्ठाः सत्यस्यात्मा विद्युत आत्मा तेजस आत्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्त एतेषामात्मा भवति ॥ १७ ॥

आदित्ये बृहन् *पाण्डरवासाश्चन्द्रमसि सोमो राजा विद्युति तेजसी स्तनयित्नौ शब्दस्याकाशे पूर्णं वायाविन्द्रोऽग्नौ विषासहिरप्सु नाम्नस्यादर्शे प्रतिरूपः प्रतिश्रुत्कायां द्वितीयः शब्दोऽसुश्छायायां मृत्युः शारीरः प्रजापतिः प्राज्ञो यमो राजा दक्षिणेऽक्षन्नाम्नः सव्येऽक्षन् सत्यस्य । तत उ ह बालाकिस्तूष्णीमास तं होवाचाजातशत्रुरेतावन्नु बालाका३ इत्येतावद्धीति होवाच बालाकिस्तं होवाचाजातशत्रुर्मृषा वै किल मा समवादयिष्ठा ब्रह्म ते ब्रवाणीति स होवाच यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वै तत्कर्म

---

* माच्छरवास इति F.

स वै वेदितव्य इति तत उ ह बालाकिः समित्पाणिः प्रतिचक्रम उपायानीति तं होवाचाजातशत्रुः प्रतिलोमरूपमेव स्यात् यत् क्षत्रियो ब्राह्मणमुपनयेदेहि व्येव त्वा ज्ञपयिष्यामीति तं ह पाणावभिपद्य प्रवव्राज तौ ह सुप्तं पुरुषं कञ्चिदीयतुस्तं हाजातशत्रुरामन्त्रयाञ्चक्रे बृहन् पाण्डरवासः सोम राजन्निति स उ ह तूष्णीमेव शिश्ये तत उ हैनं यष्ट्या विचिक्षेप स तत एव समुत्तस्थौ तं होवाचाजातशत्रुः क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्वैतदभूत्कुत एतदागादिति तदु ह बालाकिर्न विजज्ञौ ॥ १८ ॥

तं होवाचाजातशत्रुर्यत्रैष एतद्बालाके पुरुषोऽशयिष्ट यत्रैतदभूद्यत एतदागाद्धिता नाम हृदयस्य नाड्यो हृदयात्पुरीततमभिप्रतन्वन्ति यथा सहस्रधा केशो विपाटितस्तावदण्व्यः पिङ्गलस्याणिम्ना तिष्ठन्ति शुक्लस्य कृष्णस्य पीतस्य लोहितस्येति तासु तदा भवति यदा सुप्तः स्वप्नं न कञ्चन पश्यति। अथास्मिन्प्राण एवैकधा भवति तदेनं वाक् सर्वैर्नामभिः सहाप्येति चक्षुः सर्वैः रूपैः सहाप्येति श्रोत्रं सर्वैः शब्दैः सहाप्येति मनः सर्वैर्ध्यानैः सहाप्येति स यदा प्रतिबुध्यते यथाग्नेर्विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकास्तद्यथा क्षुरः क्षुरधानेऽवहितः स्याद्विश्वम्भरो वा विश्वम्भरकुलाय एवमेवैष प्राज्ञ आत्मेदं शरीरमात्मानमनुप्रविष्ट आलोमभ्य आनखेभ्यस्तमेतमात्मानमेत आत्मानोऽन्ववस्यन्ति यथा श्रेष्ठिनं स्वास्तद्यथा

